M - 2998

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) |
|---|---|---|---|---|---|---|---|---|---|---|---|
| कार्तिक शुक्लाध्याय | दिवाकर दैवज्ञ | ज्योतिष | पुर्ण | — | 3/8 | 188 | संस्कृत | कागद | 13 | 37 | |

श्रीगणेशायनमः॥ नाकेनाकेशमुख्याःसुरवरनिवहाःसन्तियेऽनंतसंख्यानात्यामाख्यात्यमीषांकथमपिचमनःपूर्वकंवाङ्म
दीया। एकंहित्वैकदंतंसकलसुरशिरःसंघसंघर्षितांघ्रिंशोघ्रंभक्तेष्टसिद्धिप्रदमिहहिसुरंसादरंतंनमामि १ मल्लारिंकुलनायकंर
विमुखान्खेटांश्चनत्वागुरोःस्मृत्वापादयुगंह्युवाप्यचततःकंचित्सुबोधांशकं।मल्लारिर्ग्रहलाघवस्यकुरुतेटीकांससद्वासनांय
स्मादल्पमतिश्चकुंठितमतिःस्यात्पूर्ववैचित्र्यवाक् २ मध्यस्फुटास्तोदयवक्रपूर्वंकर्माखिलंयद्गणितंखगोत्थम्। जीवाधनुःसं
श्रयकंविनातन्नस्यादयंनिश्चयएवगोले ३ कथमत्रकृतंविनाधनुर्ज्यैखगकर्माखिलमल्पकर्मणा। उपपत्तिविचारणाविधौ
गणकामंदधियोविमोहिताः ४ तस्माद्ब्रुवेह्युपपत्तिमस्यविमलांतन्मोहनाशायतांज्ञात्वामन्मतिकौशलाच्चगणकाःपश्यंतु
तुष्यंतुते। हेवर्यागणकाविलोक्ययदिहाशुद्धंचसंशोध्यतांकिंवाप्रार्थनयापरोपकृतिषुस्वाभाविकस्तद्गुणः ५ अथहारवं
धश्लोकेनगणाधीशःस्तूयते॥ त्रैकालंकालकालंभजभजरजनीनायकोयत्प्रियस्त्वंजंतोसंतोषतोहित्रिनयनजनकंनाकलो
कप्रकर्षम्। गेयज्ञंयज्वयज्ञंवरसुरशिरसासेवितंवित्तविद्यादातारंताम्रताभंभवभवनवशोनोनरोनम्रनत्या ६ अस्यश्लोक
स्यार्थःसुगमः तथापिबालावबोधार्थंसंक्षेपतोममैवोच्यते हेजंतोप्राणिन्तंताम्रताभंसिंदूरवर्णंगणाधीशं हीतिनिश्चयेन
संतोषतोभजभजसेवयसेवयेति सकः यस्यनम्रनत्यानम्रनमस्कारेणनरःपुरुषः भवःसंसारःसएवयद्भवनंतस्यवशःवश्यो
नोस्यात् मुक्तएवस्यादित्यभिप्रायः तमेवविशेषणद्वारास्तौति त्रिषुउत्पत्तिस्थितिनाशकालेषुवर्ततेसतथात्रिकालावस्था
यिनमविनाशिनमित्यर्थः कालमपिकलयत्याकालमपिसतथा पुनस्सकः रजनीनायकः रात्रिनाथश्चंद्रमाःयस्यप्रियः
सुहृत् तत्सुहृत्त्वंतु चतुर्थीव्रतादौप्रसिद्धम् त्रिनयनोजनकोयस्यतंशिवतनयमित्यर्थः यद्वात्रिनयनस्यजनकंपितरंगणेशं

तत्सृष्टिकथनेगणेशाच्छंकरोभूदितिगणेशकल्पादौप्रसिद्धं नाकलोकेस्वर्गलोकेप्रकर्षः उत्कर्षोयस्यतं गेयज्ञंगेयंगायनं जानातीति तथागायनादिसंगीतशास्त्रप्रवर्तकंयज्वयज्ञंयज्वनांयागकर्तॄणांयज्ञंयज्ञरूपंयज्ञांशभोक्तारमित्यर्थः वरसुर शिरसावराःसुराःश्रेष्ठाइंद्रादयःदेवास्तेषांशिरसामस्तकेनसेवितंवित्तविद्यादातारंवित्तंद्रव्यंविद्याश्चतुर्दशपुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः। वेदाःस्थानानिविद्यानांधर्मस्यचचतुर्दशेति तद्दातारमभीष्टफलप्रदायकमित्यर्थः अथश्रीमज्जलधितटनिकटस्थितनानोपवनविराजितनंदिग्रामाभिधाननगरनिवासिसकलभूपतिसेवितचरणयुगुलकमलगणिता

ज्योतिःप्रबोधजननीपरिशोध्यचित्तंतत्सूक्तकर्मचरणैर्गहनार्थपूर्णा ॥
स्वल्पाक्षरापिचतदंशकृतैरुपायैर्व्यक्तीकृताजयतिकेशववाक्श्रुतिश्च ॥ १ ॥

टवीविघटनपटुतराखिलदैवविन्मातंगकुंभपीठलुंठनोत्कंठकंठीरवश्रीमद्गुमारमणचरणद्वयपंकजावाप्तमहामतिवैभवदैववित्केशवदैवज्ञात्मजाः गणेशदैवज्ञवर्याः ग्रहलाघवाख्यंग्रहकरणंचिकीर्षवस्तत्रादौनिर्विघ्नेनग्रंथसमाप्तिप्रचयगमनाभ्यांशिष्टाचारपरिपालनायाशीर्नमस्कारवस्तुनिर्देशात्मकानांमंगलानांमंगलादीनिमंगलमध्यानिमंगलांतानिशास्त्राणिप्रथयन्ततइतिशिष्टनियमाच्चात्रवस्तुनिर्देशरूपमंगलसहितंग्रंथारंभंवसंततिलकवृत्तेनाहुः ६ श्रुतिर्वेदः जयतिसर्वोत्कर्षेणवर्तते तामेवविशेषणद्वारास्तौति किंविशिष्टाकेशवस्यविष्णोर्वाक् यस्यनिःश्वसितंवेदाइत्याद्युक्तत्वात् ज्योतिषस्तेजसः प्रकाशकस्यगुणत्रयातीतस्यतेजोरूपस्यपरब्रह्मणः प्रबोधोज्ञानंतंजनयत्युत्पादयतीतितथा माया

वेष्टितस्यजंतोर्देहात्ममानिनः असौदेहोनश्वरः आत्मानित्योव्यापकः निराकारइत्यादिज्ञा।नंवैदिककर्मद्वाराश्रव णमननिदिध्यासनसाक्षात्कारैर्भवतीत्यर्थः किंकृत्वा तत्सूक्तकर्मचरणैः तस्यांश्रुतौसुष्ठुउक्तानियानिसंध्यास्नान दानजपहोमयज्ञादीनिकर्माणि तेषांचरणैराचरणैः अनुष्ठानैश्चित्तंमनःसंशोध्यशुद्धंकृत्वायतः मनःशुद्धौजातायामेवा त्मज्ञानंभवति गहनार्थेनगंभीरार्थेनपूर्णा अर्थपूर्णाचेत्तर्हिबह्वक्षरास्यात्तदपिनयतःस्वल्पाक्षरास्वल्पान्यक्षराणियस्यां सा नन्वर्थपूर्णास्वल्पाक्षरायाश्रुतिस्तस्याःअर्थावबोधःकस्यापिनस्यात् अर्थावबोधंविनाश्रुत्युक्तकर्माचरणंकथं

परिभग्नसमौर्वि केशचापंदृढगुणहारलसत्सुवृत्तबाहु ॥

सुफलप्रदमात्तनृप्रभंतत्स्मररामंकरणंचविष्णुरूपम् ॥ २ ॥

स्यात् अतएवाह तदंशकृतैस्वस्यपरमेश्वरस्ययेंऽशाः रावणाद्यास्तैःकृताः येउपायाः रावणभाष्यादयस्तैर्व्यक्तीकृ ताप्रकटीकृतारावणभाष्याद्यवलोकनेनतदुक्तकर्माचरणंसम्यगेवस्यात् इतिविष्णुपक्षे अथपितृपक्षेकेशवस्यपितुर्वा क् ग्रहकौतुकादिग्रंथरूपाजयतीति तामेवविशेषणद्वारास्तौति श्रुतिःश्रुतिसमाना यथावेदोक्तंकर्मकार्यमेवसत्य त्वात् तथेयंकेशववागपिज्योतिषांग्रहनक्षत्राणांप्रबोधंज्ञानंजनयतीतितथा किंकृत्वा तस्यांकेशववाचिसूक्तानिया नि ग्रहसाधनादीनिकर्माणितैश्चित्तंमनःसंशोध्यगहनार्थेनपूर्णा स्वल्पाक्षराच तदंशाःतच्छिष्याःतैःकृताःयेउपायाः टीकाद्याःतैःप्रकटीकृता ॥ १ ॥ अथयथार्थभक्त्याभक्तैः रामस्मरणंकर्तव्यंगणकैरपिकरणस्मरणंकर्तव्यमित्यादि

विषमवृत्तेनाह हेशिष्यविष्णुरूपंस्मरव्यापनशीलोविष्णुः तस्यभगवतोरूपमागमोक्तंचतुर्भुजादिस्मरमनसिधेहि न
नुव्यापकस्यनिराकारस्यपरब्रह्मणःरूपमेवनास्तिकस्यस्मरणंकर्तव्यमिति यदुक्तंश्रीमद्भागवते ननामरूपेगुणजन्मक
र्मभिर्निरूपितव्येतवतस्यसाक्षिणइत्यादिएवंसंदेहंकेचिदापादयंति अत्रोच्यते भक्तेः परेणनिराकारेणइदंविश्वंस्वमा
ययासृष्टंमायासत्वरजस्तमोगुणात्मिकातेगुणाःपरब्रह्मणिनगुणातीतत्वात् अतइयंसृष्ट्यादिमायाकेवलंभगवत्भक्त
त्यैव परेभगवतिनास्त्येव अतइदमाब्रह्मादिपिपीलिकांतंसकलंत्वसत्यंगुणत्वात् अतइदं वेदोक्तमखिलंकर्मकाण्डम
सत्यं यतःयद्यत्कर्मतत्तत्प्राणिसाध्यंप्राणिनस्तुमायासत्या ननुएकेनवेदेनयदुक्तंकर्मकाण्डंतदसत्यं ज्ञानकांडमुपनिष
द्भागाख्यंसत्यंएवंकथंस्यात्उभयोःसत्यत्वमसत्यत्वंवावक्तव्यं सत्यं असत्येनैवकर्मकाण्डेनकल्पितभगवद्रूपादिसेवनेनस
त्यस्यव्यापकस्यपरब्रह्मणःज्ञानंभवति यथामिथ्याभूतेप्रतिबिंबेसत्यबिंबानुमापकत्वंएवंभगवद्रूपमसत्यमपिसत्यमेवक
ल्पितं यथाबालानांप्रथममक्षरज्ञानार्थंओंकारशिक्षायांवर्तुलपाषाणादिस्थाप्यते तद्वन्मायावेष्टितलोकानांसत्यप्रा
प्त्यर्थंभगवद्रूपंदारुपाषाणमृदादिजनितंचतुर्भुजद्विभुजैकदंतादिकल्प्यते तदपियुक्तं उक्तंचयोगवासिष्ठे अक्षरावगम
लब्धयेयथास्थूलवर्तुलदृषत्परिग्रहः । शुद्धबुद्धपरिलब्धयेतथादारुमृन्मयशिलामयार्चनम् ॥ इति तदेवविशेषणद्वारेण
विशिनष्टि परिभग्नंकृतशकलंमौर्विकयाजीवयासहईशस्यशंकरस्यचापंधनुर्येनतत्तथाजनकेनराज्ञास्वगृहेशंकरधनुरा
नीयैवप्रतिज्ञाकृतायएतद्धनुःसज्यंकरिष्यति तस्मैजानकींकन्यांदास्यामीति एवंभगवतारामेणतत्सज्जीकृत्वाशकलीकृ
तमितिरामायणादौप्रसिद्धं दृढाःगुणारज्जवोयस्मिन्सचासौहारश्चतेनलसच्छोभमानं सुतरांवृत्तौवर्तुलौबाहूयस्यत

तथा सुष्टुफलंमोक्षादितत्प्रकर्षेणददातीतितथा आत्ताअंगीकृतानुःमनुष्यस्यप्रभायेनतत्तथा मनुष्यदेहधा
रिणमित्यर्थः अथकरणपक्षेहेगणककरणंस्मर तदेवविशेषणद्वारास्तौति ईशंग्रहकर्तव्यतायांसमर्थंयच्चापंमौ
र्विकयाजीवयासहपरिभग्नंयस्मिन्तत् अस्मिन्करणेधनुर्ज्येनकृतेइत्यर्थः दृढाःअपवर्तिताःगुणाःहाराःयेतैर्लस
त्सुष्टुवृत्तौबाहूयस्मिन्तत् यत्रग्रंथेवृत्तंसाधितमस्ति तत्तुचंद्रमंदकेंद्रं बाहुःभुजःप्रसिद्धः सुफलंग्रहणादिज्ञान
रूपंफलंप्रददाति तथा आत्तानुःशंकोःप्रभाछायायस्मिन् तत्तथा अत्रशंकुच्छायासाधनमपिकृतमस्तीत्यर्थः

यद्यप्यकार्षुरुरवःकरणानिधीरास्तेषुज्यकाधनुरपास्यनसिद्धिरस्मात् ॥
ज्याचापकर्मरहितंसुलघुप्रकारंकर्तुंग्रहप्रकरणंस्फुटमुद्यतोस्मि ॥ ३ ॥

रामंमनोरमंनानाछंदोभिः अतःपूर्वकृतग्रंथेभ्योस्यवैशिष्ट्यंद्योतयन् तदारंभप्रयोजनंचदर्शयन्नाह यतः प्रयो
जनादिकथनंविनाग्रंथपठणादौप्रवृत्तिर्नस्यात् उक्तंच सिद्धिःश्रोतृप्रवृत्तीनांसंबंधकथनाद्यतः ॥ तस्मात्सर्वेषुशास्त्रेषुसं
बंधःपूर्वमुच्यते ॥ किमेवात्राभिधेयंस्यादितिपृष्टस्तुकेनचित् ॥ यदिनप्रोच्यतेतस्मैफलशून्यंतुतद्भवेत् ॥ सर्वस्यैवहिशास्त्र
स्यकर्मणोवापिकस्यचित् ॥ यावत्प्रयोजनंनोक्तंतावत्केननगृह्यते ॥ इतिवृद्धोपदेशंमत्वावदति ॥२॥ अहंगणेशः
तथापिग्रहप्रकरणंग्रहाःग्रहसंबंधीनिग्रहणोदयास्तादीनिकर्माणिप्रक्रीयंतेसाध्यंतेयस्मिन्त्रितितत्कर्तुंउद्यतःउद्यंप्राप्तो
स्मियत्रकल्पादेर्ग्रहानयनंससिद्धांतःयत्रयुगादेर्ग्रहानयनंततंत्रं यत्रशकात्ग्रहानयनंतत्करणंग्रहकरणमित्यनेनशकात्

ग्रहानयनंकरोमीतिसूचितंतथापिकथं यद्यपिउरवःमहांतः धीराःगर्गाद्याऋषयः भास्कराचार्याद्याचार्याश्च करणानि अकार्षुःचक्रुः परंतेषुधनुर्ज्यौअपास्यजीवाधनुषीत्यक्त्वाग्रहादिसिद्धिर्यस्मान्नभवति अस्माद्धेतोःइदंमया क्रियते किंविशिष्टं ज्याजिह्वाचापंधनुःएतत्कर्मभ्यांरहितंसुतरांलघुप्रकारंस्फुटंस्पष्टार्थम् ॥ ३ ॥ अथप्रकृतंग्रहाणांसाधनंतदर्थमहर्गणंवृत्तद्वयेनसाधयति द्व्यब्धींद्रोनितेति शकोवर्तमानशालिवाहनशकयातवर्षगणः द्व्यब्धींद्रोनितः द्वौअब्धयश्चत्वारःइंद्राश्चतुर्दशतैर्द्विचत्वारिंशदधिकचतुर्दशशतै १४४२ रूनितोवर्जितःसन् ग्रंथारंभमारभ्ये

द्व्यब्धींद्रोनितशकईशहृत्फलंस्याच्चक्राख्यंरविहतशेषकंतुयुक्तम् ॥ चैत्राद्यैःपृथगमुतःसद्दग्घ्न

चक्राद्दिग्युक्तादमरफलाधिमासयुक्तम् ॥ ४ ॥ खत्रिघ्नंगततिथियुङ्निरग्रचक्रांगांशाढ्यंपृथग

मुतोऽब्धिषट्कलब्धैः ॥ ऊनाहैर्वियुतमहर्गणोभवेद्देवारःस्याच्छरहतचक्रयुग्गणोऽब्जात् ॥ ५ ॥

ष्टकालपर्यंतंवर्षसमूहःस्यात् सईशैरेकादशभिः ११ हृत्भक्तः एकस्थंयत्फलंतच्चक्राख्यंचक्रसंज्ञंरविहतशेषकं रविभिर्द्वादशभिः १२ गुणितंयच्छेषकंतत् चैत्राद्यैःचैत्रमारभ्येष्टकालपर्यंतंगतमासैर्युक्तंतत् पृथक्स्थाप्यं अमुतः पृथक्स्थात्सद्दघ्नचक्रात्द्दग्भ्यांहन्यतेतत्द्दग्घ्नंएवंभूतंयच्चक्रंतेनसहितादिति ततोदिग्भिः १० युक्तात् अमरैस्त्रयस्त्रिंशद्भिः३३भक्तात् यत्फलंतेधिमासाःतैःतत्पृथक्स्थंयुक्तंमासगणःस्यात् ततस्तत् खत्रिघ्नंत्रिंशत् ३० गुणितंसत् शुद्धप्रतिपदमारभ्ययावत्पइष्टकालपर्यंतंतिथयोगतास्ताभिर्युक्युक्तंकार्यंततस्तदेवनिरग्रचक्रांगांशाढ्यंनिरग्रोनिःशेषो

नामैकस्थोयश्चक्रस्यांगांशः षडंशस्तेनाढ्यंयुक्तंतत्पृथक्स्थाप्यंअमुतःपृथक्स्थात् अब्धिषट्कलब्धैः अब्धयश्चत्वा
रः षट्कंषट्एभिःचतुःषष्टिमितैः६४र्भक्तात् येलब्धाऊनाहाःक्षयदिवसास्तैःपृथक्स्थंवियुतंहीनंअहर्गणःअह्नांदिवसानां
सावनानांगणःसमूहोभवेत् सोहर्गणःशरैःपंचभिःगुणितंहतंयच्चक्रंतेनयुक्युक्तःसप्ततष्टः७ यच्छेषंतन्मितः अब्दात्चं
द्रमारभ्यगतस्तत्दिनजोवारःस्यात् चेन्नतर्हिसोहर्गणःवारार्थंसैकोनिरेकोवाकर्तव्यः उक्तंचसिद्धांतशिरोमणौ अ
भीष्टवारार्थमहर्गणश्चेत्सैकोनिरेकःस्तिथयोपितद्वदिति अत्रोपपत्तिः अत्रग्रंथारंभेद्विचत्वारिंशदधिकचतुर्दशश
तमितः१४४२ शकआसीत् तच्छकमारभ्यग्रहानयनार्थं अनेनशकेनेष्टशकऊनीकृतोगतवर्षगणःसौरोजातः
यदुक्तं वर्षायनर्तुयुगपूर्वकमत्रसौरादिति अतस्तेषांवर्षाणांमासीकरणार्थमनुपातः यद्येकस्मिन्वर्षेद्वादशसौर
मासाभवंति तदेष्टसौरवर्षैःकिमिति वर्षाणांद्वादशगुणोरूपंहरः तस्याविकृतत्वान्नाशः अत्रकेचिन्मासानां
चांद्रत्वभ्रममारोप्यद्वादशमासाःसंवत्सरइतिश्रुतेःवैयधिकरण्यमापादयंतेतदसत् अत्रमासाःसौराएव यतश्चांद्रमासा
नांवर्षमध्येसावयवत्वमस्ति अतस्तेनपठिताः सौरास्तुसूर्याद्वादशराशिभोगेनद्वादशएवभवंति अतःश्रुतिरियंसमीची
नाइयंआचार्येणवहुषुवर्षेष्वहर्गणवाहुल्यंस्यादतोलाघवार्थंशिष्यक्लेशभयार्थंचप्रथमंवर्षाणियानितान्येवैकादशतष्टानि
कृतानियल्लब्धंतस्यचक्रसंज्ञाकृता यच्छेषंतद्द्वादशगुणितंसत्मासाःकृताः तेसौरमासाःचक्रादिमारभ्येष्टशकपर्यंतंजा
ताः ततोयन्मासीयोहर्गणःसाध्यतेचैत्रादिमारभ्यतन्मासावधियेयातमासास्तद्युक्तास्तन्मासावधिः स्युरिति अत्रक्रि
यावैषम्यंगणितद्दृष्ट्वंचदृश्यतेयतोवर्षाणिद्वादशगुणितानिसौरमासाश्चैत्रादियातमासाश्चांद्राः अन्यजात्योर्योगसंभ

वःकथंस्यात् अत्रप्रथमंसौरमासेभ्यः अधिमासानानीयसर्वेषुसंयोज्यचांद्राःकार्याः तेषुचैत्रादिचांद्रायोज्याः अत्राचा
र्येणपूर्वंभिन्नजात्योर्योगःकृतः तत्राधिशेषकमधिकंजातं अतोधिमासानयनेअधिशेषंत्यक्तंअधिकत्वात् तद्यथा चैत्रा
दिचांद्राणांसौरीकरणार्थमधिशेषंन्यूनीकर्तव्यं यतः एकस्मिन्वर्षेसौरदिनेभ्यश्चांद्रदिनानिएकादशाधिकानिदृश्यंते
एवमधिमासाःसावयवायोज्याः अनुपातस्यसावयवत्वात् तत्राधिशेषंयोज्यं अत्रोनंतुल्ययोर्धनर्णयोर्नाशः अतः सौ
रमासेभ्यश्चांद्रानयनंयदिकल्पसौरमासैः ५१८४०००००००० कल्पाधिमासाः १५९३ ३०००००लभ्यंते तदेष्ट
सौरमासैःकिमिति अत्रकल्पाधिमासैः कल्पसौरमासेषुभक्तेषुलब्धं३२।१६।४ एभिर्मासैरेकोधिमासः उक्तंचब्रह्म
सिद्धांते द्वात्रिंशद्भिर्गतैर्मासैर्दिनैःषोडशभिरतथा। घटिकाणांचतुष्केणपततिह्यधिमासकइति ततोनुपातःयद्येभिर्मासै
३२।१६।४रेकोधिमासस्तदेष्टैःकिमिति अत्राचार्येणसुखार्थंहरस्थानेत्रयस्त्रिंशदेवगृहीताः एवंमासेभ्यःअमरफलाधि
मासयुक्तमित्युक्तं अत्रयंथारंभेदर्शभिर्मासैरधिमासोभूत् अतोदिग्युक्तादिति इदंस्थूलंहरस्यस्थूलत्वात् तदंतरंसाध्यते ए
कंचक्रमेकादशवर्षात्मकं तद्द्वादशगुणितंजातामासाः १३२ तेभ्यःकल्पाद्यनुपातेनजाताः४।३त्रयस्त्रिंशद्भक्तेषुजाताः४
अत्रांतरंएकचक्रेद्विमासतुल्यं ततोनुपातः यद्येकस्मिन्चक्रेद्विमासतुल्यमंतरंतदेष्टचक्रैःकिं अतःसद्दग्नचक्रादिति एवम
धिमासयुक्ताःसौराश्चांद्रमासगणोजातः ततोदिनीकरणार्थमनुपातः यद्येकमासस्यत्रिंशद्दिनानितदेष्टमासैःकिं अतोमा
सास्त्रिंशद्गुणाःरूपहरस्याविकृतत्वान्नाशः एवंजाताश्चांद्रदिवसास्तेतन्मासशुक्लप्रतिपदादिपर्यंतंइष्टतिथिकरणार्थंगत
तिथिर्युगितिततोनुपातः कल्पचांद्रैः१६०२९९९००००००० कल्पदिनक्षयाः २५०८२५४०००० लभ्यंते तदेष्टचां

द्वैः किमिति कल्पदिनक्षयैः कल्पचांद्रेषु भक्तेषु लब्धं ६३।५४।३२ यद्येभिर्दिनैरेकोदिनक्षयस्तदेष्टैः किमिति अत्राचार्ये
णहरस्थानेचतुःषष्टिरेवधृताः एवंचतुःषष्टिभक्ताःचांद्रादिनक्षयाःस्युरिति अत्रांतरज्ञानंचक्रषट्केवर्षाणि ६६ एषां
दिनानि २४४८० एकत्र ६३।५४।३२ एभिरेकत्रच ६४ एभिर्भक्तेलब्धेफले २८३।३८२ अवयवत्यागः तेनानु
पातः यदिषड्भिश्चक्रैरेकदिनतुल्यमंतरंतदेष्टचक्रैः किमिति अतोनिरग्रचक्रांगांशयुक्कार्यइत्युपपन्नं एवंदिनक्षयाश्चांद्रेषु
ऊनाःकार्याः यतोवर्षमध्येचांद्रदिवसेभ्यः सावनदिनानिपंचदिनाल्पकानिदृश्यंते अतउक्तंऊनाहैर्वियुतमिति अत्रदिन
क्षयाःसावयवाग्राह्यास्तेनगृहीताः यतःसावयवदिनक्षयोनचांद्रेषुकृतेष्वहर्गणःतिथ्यंतकालीनःस्यात् गततिथियुक्तत्वात्

खविधुतानभवास्तरणेर्ध्रुवःखमनलारसवार्धयईश्वराः ॥
सितरुचोभमुखोथखगायमौशरकृतागदितोविधुतुंगजः ॥ ६ ॥

ग्रहाःसूर्योदयिकाःकर्तव्या एवंतिथ्यंतसूर्योदययोर्मध्येदिनक्षयशेषमेवतत्तेषुयोज्यंयतस्तिथ्यंतादग्रेसूर्योदयःपूर्ववि
योज्यमधुनायोज्यंतुल्यत्वात्तयोर्नाशः उक्तंचसिद्धांतशिरोमणौ तिथ्यंतसूर्योदययोस्तुमध्येसदैवतिष्ठत्यवमावशेषं। त्य
क्तेनतेनोदयकालिकःस्यात्तिथ्यंतकालेद्युगणोन्यथात्विति एवंसावनोहर्गणोजातःसप्ततष्टःसन् अब्जाद्वारःस्यात्
यथाग्रंथादौसोमवारआसीत् अत्रचक्रदिनानि४०१६सप्ततष्टानि शेषं५ तत्रानुपातः यद्येकचक्रेपंचवाराअंतरं
तदेष्टचक्रैः किमिति अतः शरहतचक्रयुगिति ॥ ४ ॥ ५ ॥ एवमहर्गणंप्रसाध्येदानींश्लोकद्वयेनध्रुवानाह खवि
ध्विति शैलाद्वाविति तरणेःसूर्यस्यभमुखः भानिराशयोमुखेयस्यसतथाराश्याद्यः अयंध्रुवःस्यात् अयंकः खविधुता

नभवाः खं०विधुः १ तानान्येकोनपंचाशत् ४९ भवाः११ सितरुचः सितांशुश्चारुक्दीप्तिर्यस्यतस्यचंद्रस्यध्रुवः खंशून्यं०अनलास्त्रयः ३ रसवार्धयःरसाःषट् ६ वार्धयश्चत्वारः ४ एवंषट्चत्वारिंशत् ४६ ईश्वराः ११ अत्र सर्वत्रांकानांवामतोगतिन्यायः विधुतुंगजः विधोश्चंद्रस्ययत्तुंगंमदोच्चंतस्यध्रुवोगदितउक्तः खगाःग्रहाः नव९ यमौद्वौ २ शरकृताःशराःपंच कृताश्चत्वारः एवंपंचचत्वारिंशत् ४५ ॥ ६ ॥ अगोराहोर्ध्रुवःशैलाःकुलाचलाः सप्त ७ द्वौप्रसिद्धौ २ खशराःखंशून्यंशराःपंचएवंपंचाशत् ५० क्षितिभुवःक्षितेर्भवतीतिक्षितिभूस्तस्यमंगलस्यायंध्रुवः

शैलाद्वौखचराअगोःक्षितिभुवोभूतत्वदंताविदःकेंद्रस्याब्धिगुणोडवःसुरगुरोः
खंषडयमावस्विलाः ॥ द्राकेंद्रस्यभृगोःकुशक्रयमलाराश्यादिकोथोशनेः
शैलाःपंचभुवोयमाब्धयइमेथक्षेपकःकथ्यते ॥ ७ ॥

भूःएकः १ तत्वानिपंचविंशतिः २५ दंताः द्वात्रिंशत् ३२ विदःबुधस्यकेंद्रस्यायंध्रुवः अब्धयश्चत्वारः ४ गुणास्त्र यः ३ उडूनिनक्षत्राणिसप्तविंशतिः २७ सुराणांदेवानांगुरोःबृहस्पतेः ध्रुवःखंशून्यं० षडयमाः षट्प्रसिद्धाः यमौद्वौ एवंषड्विंशतिः २६ वस्विलाः वसवअष्टौइलापृथ्वीएका एवमष्टादश १८ भृगोःशुक्रस्य यदाकेंद्रंशीघ्रकेंद्रंतस्यध्रुवः कुः एकः १ शक्राःचतुर्दश१४ यमलौद्वौ२शनेरपिराश्याद्योयं ध्रुवः शैलाः सप्त७ पंचभुवः पंचदश१५ यमाब्धयःयमौद्वौ अब्धयश्चत्वारः एवंद्विचत्वारिंशत् ४२ एवंग्रहध्रुवाराश्याद्याः अत्रोपपत्तिः अत्राचार्येणएकादशतष्टानिवर्षाणिकृत्वा

अहर्गणानयनंकृतं एवंयोहर्गणः सएकादशवर्षमध्यस्थएवतदुत्पन्नायेग्रहाः तेएकादशवर्षमध्यएवभवंति अतोयावंतिच
क्राणिभुक्तानितेषांग्रहानानीयएतेषुग्रहेषुप्रक्षिप्यग्रंथशकादिमारभ्यग्रहाःस्युरिति एवमाचार्येणएकमितचक्रादेकादश
वर्षात्मकात् ग्रहाःसाधिताः तेयथाकल्पसौरवर्षैःकल्पग्रहभगणः तदैकादशवर्षैःकतीति अत्रागतानांभगणानांप्रयो
जनाभावात् राश्याद्याएवगृहीताः तेषांध्रुवसंज्ञाकृतास्थिरत्वात् राश्याद्याएवगृहीताः तेषामहर्गणंप्रसाध्यपूर्वकरणो
क्तरीत्याग्रहाःसाधितास्तेग्रहेषुयोज्याः अत्राचार्येणद्वादशराशिशुद्धान् कृत्वाध्रुवसंज्ञाःकृताः अतोदिनगणागतग्रहे

रुद्रागोब्जाःकुवेदास्तपनइहविधौशूलिनोगोध्रुवःषट्तुं गेक्षात्यष्टिदेवास्तमसि
खमुडवोष्टाग्नयोथोमहीजे ॥ दिक्शैलाष्टौज्ञकेंद्रेविभकलनवभंपूजितेऽद्यश्वि
भूपाःशौक्रिकेंद्रेगृहाद्योद्रिनखनवशनौगोतिथिस्वर्गतुल्यः ॥ ८ ॥

षुध्रुवावियोज्याइत्यग्रेउक्तमस्तिचक्रशुद्धत्वात् अत्रबालावबोधार्थंधूलीकर्मएकादशवर्षाणामयमहर्गणः ४०१६ अतः
अयमहर्गणोविश्वगुणस्त्रिखांकैर्भक्तइत्यादिनाजातोमध्यमोरविः ११।२८।१०।४९ अयंद्वादशशुद्धोजातोरविध्रु
वः ०।१।४९।११ एवंसर्वेषांग्रहाणांध्रुवाःउत्पाद्याः एवंध्रुवानुक्त्वाक्षेपकमाह अथेति अथशब्दोनंतरवाची ध्रु
वकथनानंतरंक्षेपकःकथ्यते ॥ ७ ॥ रुद्राइति तपनेसूर्ये तपनःसवितारविरित्यभिधानात् गृहाद्याः गृहाःराशयः
आदौयस्येतिराश्याद्यःक्षेपकःस्यात् रुद्राःएकादश ११ गोब्जाःगावःनव अब्जश्चंद्रःएकः१ एवमेकोनविंशतिः१९

कुवेदाः कुरेकः वेदाश्चत्वारः एवमेकचत्वारिंशत् ४१ इतिविधौचंद्रेशूलिनःएकादश ११ गोभुवःएकोनविंशतिः १९
षट्प्रसिद्धाः ६ तुंगेचंद्रमंदोच्चेअक्षाःपंचः ५ अत्यष्टयःसप्तदश १७ देवास्त्रयस्त्रिंशत् ३३ तमसिराहौ खंशून्यं ०
उडवःसप्तविंशतिः २७ अष्टाग्नयःअष्टत्रिंशत् ३८ अथोराहुक्षेपकथनानंतरंमहीजेभौमेदिशोदश १० शैलाःसप्त ७
अष्टौप्रसिद्धाः ८ ज्ञकेंद्रेबुधशीघ्रकेंद्रविभकलनवभंविगताःभकलाःसप्तविंशतिकलायस्मात् एवंभूतंयन्नवभंराशिनवकंत
त्तेनराश्यष्टकं ८ एकोनत्रिंशद्भागः २९ त्रयस्त्रिंशत्कला ३३ श्चेतिपूजितेगुरौअद्रयःसप्त ७ अश्विनौद्वौ २ भूपाः
षोडश १६ शौकेशुक्रस्येदंतस्मिन्शौक्रेकेंद्रेद्विनखनव अद्रयःसप्त ७ नखाःविंशतिः २० नवप्रसिद्धाः ९ शनौगोति

दिनगणभवखेटश्चक्रनिघ्नध्रुवोनोदिवसकृदुदयेस्वक्षेपयुङ्मध्यमःस्यात् ॥
निजनिजपुररेखांतःस्थितायोजनौघाद्रसलवमितलिप्ताःस्वर्णमिंदौपरेप्राक् ॥ ९ ॥

थिस्वर्गतुल्यः गावोनव ९ तिथयःपंचदश १५ स्वर्गाएकविंशतिः एभिस्तुल्यः शनिक्षेपकःस्यात् अत्रगृहाद्यंसर्वत्रसं
बद्ध्यते अत्रोपपत्तिः येत्रगृहाःतेग्रंथारंभमारभ्यजाताः अतोग्रंथारंभग्रहाअत्रयोज्याः तेकल्पादितःस्युरिति तत्साध
नंयथा द्व्यब्धींद्रतुल्यं १४४२ शकंप्रकल्प्य चैत्रशुक्लप्रतिपदिसूर्योदयिकाग्रहामध्यमायस्मात्तस्मात्पक्षाद्येयेघटंते
वत्तत्पक्षेभ्यस्तेतेसाधितास्तेषांक्षेपकसंज्ञाकृता यतःक्षिप्यतेसौक्षेपः अस्यग्रहेषुक्षेप्यत्वात्क्षेपकत्वम् ॥ ८ ॥ एवं
क्षेपकानुक्त्वाक्रमप्राप्तअहर्गणात्मध्यमग्रहानयनमाह दिनगणेति दिनगणादहर्गणात् भवउत्पन्नोवक्ष्यमाण

रीत्याहर्गणात् साधितोग्रहश्चक्रेणनिघ्नोगुणितोयोध्रुवस्तेनऊनः स्वस्यक्षेपोयउक्तस्तेनयुक्तोदिवसःकृतःसूर्यस्यउदये
मध्यमःस्यात्लंकायांमध्यमार्कोदयासन्नसमयेमध्यमोग्रहःस्यादित्यभिप्रायः उक्तंचसिद्धांतशिरोमणौ "दशशिरःपु
रिमध्यभास्करेक्षितिजसन्निधिगेसतिमध्यम" इतिअयमुदयांतरसंस्कृतःसन्लंकामध्यमार्कोदयकालिकोभवतिउदयां
तरंस्वल्पत्वादाचार्येणत्यक्तमतोनदोषः तस्यस्वदेशीयकरणार्थंसंस्कारमाह निजनिजेति निजंनिजंस्वीयंयत्पुरंग्रहक
र्तुर्गणकस्ययन्नगरंतच्चरेखाच अनयोरंतर्मध्येवर्तमानोयोयोजनौघोयोजनानांसमूहस्तस्मात्योरसैःषड्भिर्लवःतेनमिताः
याःलिप्ताःयत्कलादिद्विस्थंफलंइंदौचंद्रेस्वंधनंऋणंहीनंचकार्यंकस्मिन्सतिपरेप्राक्रेखातःस्वदेशेसतिपश्चिमायांधनंपूर्व
स्यामृणमित्यर्थः अत्रपूर्वस्योपपत्तिःपूर्वमेवोक्तास्ति उत्तरार्धस्योपपत्तिर्यथायःकृतोलंकायांमध्यमोग्रहःसस्वदेशीयः
कर्तव्यः अतोदेशांतरंदेयंयद्देशांतरंद्विविधंपूर्वापरंयाम्योत्तरंचयत्तच्चरंतच्चरेखार्कोदयलंकार्कोदययोरंतरंतदेवप्र
तिपादयिष्यतिपूर्वापरं रेखार्कोदयस्वपुरार्कोदययोरंतरंरेखामध्यरेखाभुवइतिशेषः उक्तंचसिद्धांतशिरोमणौयल्लंको
ज्जयिनीपुरोपरिकुरुक्षेत्रादिदेशान्स्पृशत्सूत्रंमेरुगतंबुधैर्निगदितंसामध्यरेखाभुवइति अत्रार्कोदयात्स्वार्कोदयःकदा
भविष्यति इतिज्ञानार्थमुपायः लंकायांउक्तः परमोभूपरिधिःसप्तारिनंदाब्धितुल्यः ४९६७ मेरौपरिधेर
भावः मध्येनुपातः सयथा लंकायामपज्याभावालंबज्यापरमात्रिज्यातुल्याअतः यदितुत्रिज्यातुल्ययालंबज्यया अ
यमुक्तोभूपरिधिस्तदेष्टज्यलंबज्ययाकिमितिलंबज्यायाः सर्वत्रत्रिज्यातोल्पत्वात् उक्तात्सर्वत्रोनएवभूपरिधिःस्यादतः
सुखार्थमष्टचत्वारिंशच्छतमितोगृहीतः ४८०० ततोनुपातः यद्येभिःपरिधियोजनै ४८०० र्ग्रहोगतिकलाःक्रामति

तदेष्टैःकिमितिरेखास्वदेशांतरयोजनैः किमिति अत्रायंसंस्कारश्चंद्रस्यैवकृतः अन्येषांगतेरल्पत्वात्नकृतःस्वल्पां
तरत्वात्त्यक्तमतोनदोषाय उक्तंचसिद्धांतशिरोमणौ "स्वल्पांतरत्वादबहूपयोगात् प्रसिद्धभावाच्चबहुप्रयासात्। ग्रंथस्य
तज्ज्ञैर्गुरुताभयेनयस्त्यज्यतेर्थोसनदूषणाये"ति अतोरेखास्वदेशांतस्यांनवोगतिः ७९० गुणःपरिधिः ४८०० हरः
गुणहरौगुणेनापवर्तितौजातोहरःषट् ६ अतउक्तंनिजनिजेत्यादिधनर्णोपपत्तिर्यथायेग्रहास्तेमध्यरेखोदयजाःमध्यरे
खातःपूर्वदेशेरेखार्कोदयात् पूर्वसूर्योदयः अतःऋणंक्रियतेरेखायाःपश्चिमदेशेस्थितानां रेखोदयानंतरंस्वार्कोदयः अतः

स्वखनगलवहीनोद्युव्रजोज्ञार्कशुक्राःखतिथिहृतगणोनालिप्तिकास्वंशकाद्याः ॥
गणमनुहतिरिंदुःस्वाद्रिभूभागहीनःखमनुहृतगणोनोलिप्तिकास्वंशपूर्वः ॥ १० ॥

धनंक्रियतइत्युपपन्नम् ॥ ९ ॥ अथसूर्यबुधशुक्रचंद्रानेकवृत्तेनसाधयति स्वखनगेति स्वस्याहर्गणस्यैवखनगलवः
सप्तत्यंशः तेनहीनोद्युव्रजोहर्गणःसएवअर्कज्ञशुक्राःसूर्यबुधशुक्राः भागाद्याःस्युस्तेषामयंसंस्कारः लिप्तिकासुकला
सुखतिथिहृतेनगणेनसार्द्धशतभक्ताहर्गणेनऊनाइतिएतदुक्तंभवति अहर्गणःसप्तत्या ७० भाज्यःफलंभागाःयच्छेषं
तत्षष्ट्यागुण्यंपुनःसप्तत्या ७० भाज्यंफलंकलाःयच्छेषंतत्षष्टि ६० गुणितंसप्तति ७० भक्तंफलंविकलाःतेनअंशा
दिनाअहर्गणोहीनःकार्यः ततोहर्गणःसार्धशतेन १५० भाज्यः फलंकलाःशेषंषष्टि ६० गुणंसार्द्धशत १५०
भक्तंफलंविकलाःतेनकलादिनातत्फलंहीनंसत् भागाद्यामध्यमाःसूर्यबुधशुक्राःस्युरिति अत्रविकलाः षष्ट्याभाज्याः

फलंमूलंकलासुयोज्यंकलाअपिषष्टिभक्ताःफलंभागेषुयोज्यंभागास्त्रिंशद्भक्ताः फलंराशयःस्युः ततस्तत्रचक्रहतःस्वध्रुव
कोहीनःकार्यः क्षेपःसंयोज्यः ततस्तद्राशयोद्वादशभक्ताभगणाःस्युस्तेप्रयोजनाभावात्त्याज्याःरविराह्वोर्भगणाग्रहणेप
र्वेशानयनार्थोपयुक्ताःसंतिअतस्तेस्थाप्याः अत्रोपपत्तिः अत्रपूर्वगत्याग्रहसाधनंकर्तव्यं तत्रपूर्वगतिज्ञानोपायोयथापूर्वं
ब्रह्मणाचैत्रादौरविवारेभचक्रंक्रांतिमंडलादिवृत्ताढ्यंप्रवहानिलेक्षिप्तं तत्रग्रहाःप्रवहानिलवशेनभचक्रंकामयित्वाभि
न्नभिन्नयापूर्वगत्यास्वस्थानात्किंचित्किंचिच्चलिताःएवंप्रत्यहंविलोक्यमानेग्रहाणांपूर्वगतिर्भिन्नाभिन्नादृष्टाअत्रगृ
हानयनेकश्चिदुपायोनदृश्यतेप्रतिदिनविलक्षणगतित्वात् तत्रेत्थंब्रह्मणाविरचितंगोलंचक्रविकलांकितंकृत्वाप्रत्यहंग्र
हावेधिताः एवमद्यतनश्वस्तनयोरंतरंग्रहस्यगतिः एवंग्रहभगणभोगपर्यंतंग्रहगतीरानीयतासुमध्येयापरमाधिकागतिर्या
चपरमाल्पातयोर्योगार्धंमध्यगतिःसैवांगीकृताद्वुःसाध्यासूक्ष्माणांविकलाकोट्यंशादीनामलक्ष्यत्वात् सास्थूलाजातासै
वांगीकृताएवंकियत्यपिकालेजातेवसिष्ठादिभिर्विलोक्यमानेगतेरंतरंदृष्टंएवमन्यैरपिआर्यभट्टब्रह्मगुप्तभास्कराद्यैस्तयै
वयुक्त्यागतयोभिन्नादृष्टास्तेभ्योभगणाअपिसाधितास्तेयथायद्येकदिनेनैतावतीगतिस्तदाकल्पदिनैःकिमिति एवंसि
द्धांतेग्रहभगणाःभिन्नाभिन्नाःपाठपठितास्तेतत्कालमेवघटंतेस्मइदानींमहदंतरितादृश्यंते उक्तंचवराहसंहितायां उक्ता
भावेविकृतिःप्रत्यक्षपरोक्षणैर्व्यक्तिरिति वसिष्ठसिद्धांतेपि इत्थंभाव्यसंक्षेपाद्युक्तंशास्त्रंमयोदितं। विस्तरस्तीरविचंद्राद्यैर्भवि
ष्यतियुगेयुगे । युगेयुगेमहतिकालेविस्त्रंसनंविस्त्रस्तिः शिथिलत्वमितियावत् उक्तंचसूर्यसिद्धांते “शास्त्रमाद्यंतदेवेदंय
त्पूर्वंप्राहभास्करः॥ युगानांपरिवर्तेनकालभेदोत्रकेवलं॥” ब्रह्मसिद्धांतेपि “ध्यानग्रहोपदेशाज्जीवंज्ञात्वाशुदैवज्ञैः। तत्सं

स्फुटग्रहेभ्यःकर्तव्यौनिर्णयादेशावि ”ति अमुनाचार्येणनलिकावंधेनग्रहानावेध्यग्रहांतराणिकृतानिलक्षितानि तद्यथा
सौरपक्षीयःसूर्यचंद्रोच्चंचनवकालान्यूनासौरपक्षीयः चंद्रोघटते आर्यपक्षीयाभौमगुरुराहवः बुधकेंद्रंब्रह्मपक्षीयं आर्य
पक्षीयःशनिःपंचांशाधिकोघटते शुक्रकेंद्रंतुब्रह्मपक्षीयार्यपक्षीययोर्योगार्धतुल्यंघटतेअस्मिन्कालेएतेदृग्गोचराः एवमग्रे
पिभविष्यन्महागणकैर्नलिकाबंधादिनाग्रहवेधंकृत्वा अंतराणिलक्षयित्वाग्रहकरणानिकार्याणीत्यग्रेग्रंथसमाप्तावा
चार्येणाप्युक्तमस्ति अतोस्मिन्कालेअत्रत्याएवग्रहाघटंतेएवमनयावर्तमानघटनयाज्ञातामध्यमारविगतिर्भागाद्या ०।
५९।८।१०।१७।९। तत्रानुपातः यद्येकदिनेनैतावतीगतिस्तदाहर्गणेनकिमिति अहर्गणस्यगतिःगुणःअत्रखंडगुणना
र्थंगतेरेकंखंडंगत्यपेक्षयाअधिकंगृहीतं ०।५९।८।३४।१७।९ अस्यापिएकोधृतः अंतरं ०।०।५१।२५।४२।५१। अ
नेनाहर्गणोगुण्यःरूपगुणाहर्गणाच्छोध्यः अत्रकर्मगौरवंलाघवार्थमिदं ०।०।५१।२५।४२।५१। यथैकसंख्यंस्यात्त
थाकेनापिगुण्यंएवंसप्तति ७० गुणितेरूर्ध्वंरूपं १ निःशेषंभवति अतोगुणोरूपगुणःसप्ततिभक्तःफलेनरूपगुणोहर्ग
णोहीनकार्यःयतोधिकंगृहीतेउभयत्ररूपतुल्यस्यगुणस्याविकृतत्वात् नाशः एवंस्वखनगलवहीनइति अथगतेरपेक्ष
याधिकंगृहीतंयत्खंडं ००।०।२४।०।०। अनेनगणोगुण्यःफलंरवौहीनंकार्यंअधिकत्वात् अत्रापिलाघवार्थमिदंखति
थिभिः १५० सवर्णितंजातंकलास्थानेरूपं १ अतःकलासुखतिथिहृतगणोनइतियामध्यमार्कगतिःसैवबुधशुक्रयोर्दृ
ष्टाअतोरविबुधशुक्रामध्यमास्तएव अथचंद्रंसाधयति गणमनुहतिरिति गणोहर्गणः मनवश्चतुर्दश १४ अनयोर्हतिर्ना
मचतुर्दशगुणोहर्गणःअंशपूर्वोभागाद्यःइंदुश्चंद्रःस्यात् किंविशिष्टःस्वाद्रिभूभागेनस्वसप्तदशांशेन १७ हीनःकार्यःपुनर्लि

त्तिकासुकलासुखमनुभिश्चत्वारिंशदधिकशतेन१४०हृतोयोगणस्तेनोनःसकार्यइत्यर्थः अत्रोपपत्तिः अत्रचंद्रमध्यम गतिः १३।१०।३४।५१।५६।०। अनयागणोगुण्यःतत्रगतेरधिकंखंडंगृहीतं १३।१०।३५।१७।३८।५१ अत्रापि लाघवार्थंपूर्णाश्चतुर्दशगृहीताः अतउक्तं गणमनुहतिरिति इदंचतुर्दशभ्यःकियदन्यमस्तीतिचतुर्दशशुद्धं ०।४९।२४। ४२।२१।९। इदंसप्तदशगुणितंजातमूर्ध्वस्थाने १४ अत्रोभयचतुर्दशतुल्यगुणोअतःस्वाद्रिभूभागहीनइत्युक्तं ततोग तेरपेक्षयायत्गृहीतमधिकंखंडंतदिदं ०।०।०।२५।४२।५१। खमनुभिःसवर्णितंजातंकलास्थानेरूपंसगुणःखमनवोहरः रूपगुणस्याविकृतत्वात्खमनुहतगणोनोलिप्तिकास्विति स्वस्वध्रुवस्वस्वक्षेपसंस्कारःसर्वेषांग्रहाणांकार्यएव ॥ १० ॥

नवहृतदिनसंघश्चंद्रतुंगंलवाद्यंभवतिखनगभक्तद्युव्रजोपेतलिप्तम् ॥
नवकुभिरिषुवेदैर्घस्रसंघाद्विधातात्फललवकलिकैक्यंस्यादगुश्चक्रशुद्धः ॥ ११ ॥

इतिचंद्रंप्रसाध्येदानींचंद्रोच्चराह्वोःसाधनमेकवृत्तेनआह नवहृतेतिनवभिः नव ९ हृतोभक्तोयोदिनसंघोहर्गणःसएवल वाद्यंचंद्रतुंगंचंद्रमंदोच्चंभवतिकिंविशिष्टंखनगैःसप्तत्या ७० भक्तोयोद्युव्रजोहर्गणस्तेनउपेतायुक्तालिप्ताःकलायस्यतत्त थागणस्यसप्तत्यंशेनकलाविकलारूपेणयुक्तमित्यर्थः अत्रोपपत्तिः मंदोच्चशीघ्रोच्चादिगतिज्ञानं तत्स्थानंचाग्रेकरणो पपत्तौसविस्तरंवक्ष्यामः अत्रतुकेवलामुच्चगतिमंगीकृत्योपपत्तिरुच्यते तत्रचंद्रोच्चगतिः ०।६।४०।५१।२५। ४३। अत्रैकंखंडंगतेर्न्यूनंगृहीतं ०।६।४० अनेनगणोगुण्यःतत्रलाघवार्थंइदंनव ९ सवर्णितंजातमूर्ध्वस्थानेरूपं १

सगणोविकृतत्वात्त्यक्तः अतोनवहृतइत्युक्तअवशिष्टंखंडं ०।०।५।१।२५।४३ इदंसप्तति ७० सवर्णितंजातमूर्ध्वंकला
स्थानेरूपं १ अतःखनगभक्तहुत्रजोपेतलिप्तमितियतःपूर्वखंडंन्यूनंगृहीतंअतोयुक्तंएवंचंद्रोच्चंप्रसाध्येदानींराहुंप्रसा
धयतिनवकुभिरिषुवेदैरिति नवकुभिःएकोनविंशत्या १९ इषुवेदैःचइषवःपंचवेदाश्चत्वारःएभिःपंचचत्वारिंशद्भिः
४५ द्विधागणात्आप्तात्गणःएकत्रएकोनविंशतिभक्तः अंशादिफलंग्राह्यं अन्यत्रचपंचचत्वारिंशद्भक्तः फलंक
लाद्यंएवंफललवकलिकैक्यंउभयोर्भागादिककलादिकफलयोर्योगः चक्रशुद्धौद्वादश १२ शुद्धस्ततोध्रुवक्षेपसंस्कृतः
अगुःराहुःस्यादित्यर्थः अत्रोपपत्तिःराहुनामपातःपातोनामक्रांतिमंडलयोःसन्यासः सूर्योयस्मिन्वृत्तेभ्रमतितत्क्रांति
वृत्तंक्रांतिमंडलात्ग्रहोयावतांतरेणदृश्यतेतस्यांतरस्यशरसंज्ञाकृताएवंरविव्यतिरिक्ताः सर्वेग्रहाःक्रांतिमंडलेनभ्रमंति
शरतुल्यांतरेणग्रहाः यत्रभ्रमंतितद्वृत्तस्यविमंडलसंज्ञाकृताएवंक्रांतिवृत्तशरवृत्तसंपातस्यविलोमगतिर्दृष्टा तज्ज्ञानंयथा
गोलेपूर्वसंपातादन्यसंपातःकियद्भिर्भागैः पृष्ठतोदृष्टस्तेभागाःषष्टि ६० गुणाःकलाःततोनुपातः यद्येभिःसंपातद्वयां
तरदिनैःएताः अंतरकलाःलभ्यंतेतदैकदिनेनकतीतिलब्धापातस्यविलोमगतिः एवंचंद्रपातगतिः अन्येषांग्रहाणांपात
साधनंनोक्तंयतस्तेषांगतिर्वर्षेणापिविकलानलभ्यतेअतश्चंद्रपातएवसाध्यतेतद्गतिः ०।३।१०।४८।२५।१५ अतोनु
पातात् अनयागणोगुण्यः अत्रगतेरपेक्षयाऊनंखंडंधृतं ०।३।९।२८।२५।१५ अनेनसावयवेनखंडेनगणोगुण्यः
इतिकर्मगौरवंअतोलाघवार्थंइदमेकोनविंशत्या १९ सवर्णितंजातमूर्ध्वस्थानेरूपं १ एवंनवकुभिःगणोभाज्यः
फलंभागाअवशिष्टंगतिखंडं ०।०।१।२०।०।० इदंपंचचत्वारिंशतासवर्णितंजातंकलास्थानेरूपं १ अतइषुवेदैर्भ

क्ष्इतिकलैक्यंकार्यं यतः पूर्वखंडगतेरूनंधृतंएवंजातःपातःसएवपातंप्रसाध्येदानींभौमंबुधशीघ्रोच्चंचैकवृत्तेनसाधयति ॥ ११ ॥ दिग्घ्नइति दिनगणोदिघ्नोदिग्भिर्दशभिर्हन्यतेगुण्यतेसतथा एवंभूतोद्विधास्थानद्वयेस्थाप्यः एकत्रांककुभिः अंकाःनव कुरेकएवमेकोनविंशत्या १९ भवतः अन्यत्रचत्रिशैलस्त्रयःप्रसिद्धाः शैलाःसप्तएवंत्रिसप्तत्या ७३ भक्तःफलांशककलाविवरंपूर्वफलमात्रांशाःभागाद्यंद्वितीयंकलाः तयोर्विवरंअंतरंकुजोभौमःस्यात् अत्रोपपत्तिः भौमगतिः ०।३१।२६।३१।३।३६ अत्राधिकंखंडंगृहीतं ०।३१।३४।४४।१२।३६ अनेनगणोगुण्यः अत्रलाघवार्थमिदमेकोनविंशत्यासवर्णितंजाताभागस्थानेदशअतउक्तंदिग्घ्नोगणः अंककुभिर्भाज्यइति अस्मात्खंडात्गति

दिग्घ्नोद्विधादिनगणोंककुभिस्त्रिशैलैर्भक्तःफलांशककलाविवरंकुजःस्यात् ॥
त्रिघ्नोगणःस्ववसुदृग्लवयुग्ज्ञशीघ्रकेंद्रंलवाद्यहिगुणाप्तगणोनलिप्तम् ॥ १२ ॥

मपास्यशेषंखंडं ०।०।८।१३।९ इदंत्रिसप्तत्यासवर्णितंजाताःकलास्थानेदश १० उभयत्रदशतुल्योगुणोऽतोदिग्घ्नोद्विधेत्युक्तंफलयोरंतरंकार्यंयतः पूर्वखंडगतेरधिकंधृतं एवंभौमसाधनंकृत्वेदानींबुधशीघ्रकेंद्रसाधनमाह त्रिघ्नइति त्रिभिर्गुण्यतेहन्यतेसतथाएवंभूतोयोगणः सस्ववसुदृग्लवयुक्स्वस्यत्रिगुणिताहर्गणस्ययोवसुदृग्भिरष्टाविंशत्या २८ लवोभागस्तेनसएवत्रिगुणितोगणोयुग्युक्तःसन् लवादिभागादिज्ञस्यबुधस्यशीघ्रकेंद्रंस्यात् किंविशिष्टं अहिगुणाप्तगुणोनलिप्तं अहयोष्टौगुणास्त्रयः एवमष्टत्रिंशद्भि ३८ राप्तोभक्तोयोगणस्तेनऊनाःलिप्ताःकलायस्येतितत्तथा ग

णस्याष्टत्रिंशद्भागोकलादिस्तेनतदूनंकार्यमित्यर्थः अत्रोपपत्तिः बुधशीघ्रकेंद्रगतिः ३।६।२४।८।७।१३ अनयाग
णोगुण्यइत्येकंखंडंत्रयः ३ त्रिभिर्गुण्यः अतस्त्रिघ्नोगणइति अवशिष्टंखंडंकिंचिदधिकंगृहीतं०।६।२५।४२।५१।
२५। अनेनगणोगुण्यइत्यत्रेदमष्टाविंशत्या २८ सवर्णितंभागस्थानेत्रयः ३ उभयत्रापिगुणस्त्रितुल्यः अतः
स्ववसुदृग्लवयुगिति अत्राधिकमेवतत्खंडं ०।०।१।३४।४४।१२ इदंअष्टत्रिंशद्भिः ३८ सवर्णितंजातंकलास्था
नेरूपं १ तस्याविकृतत्वादहिगुणाप्तगणोनलिप्तमितिपूर्वखंडमधिकंगृहीतंअतइदंहीनंकृतं एवंबुधशीघ्रकेंद्रंप्रसाध्येदानीं
गुरुंशुक्रशीघ्रकेंद्रंचैकवृत्तेनसाधयति ॥ १२ ॥ द्युपिंडइति द्युपिंडोहर्गणः अंकैर्द्वादशभि १२र्भक्तःसन्लवाद्योभागा

द्युपिंडोर्कभक्तोलवाद्योगुरुःस्याद्द्युपिंडात्खशैलाप्तलिप्ताविहीनः ॥
त्रिनिघ्नाद्द्युपिंडाद्द्विधाक्षैःक्विभाब्जैरवाप्तांशयोगोभृगोराशुकेंद्रम् ॥ १३ ॥

द्योगुरुर्बृहस्पतिःस्यात् किंविशिष्टःद्युपिंडात्अहर्गणात्खशैलैःसप्तत्या ७० आप्तालब्धायालिप्ताःकलाःकलादिस्तिस्थं
फलंतेनफलेनविहीनोविवर्जितःकार्यइत्यर्थः अत्रोपपत्तिः गुरोर्गतिः ०।४।५९।८।३४।१७ अनयागणोगुण्यइति अ
त्रैकंखंडं ०।५ इदंद्वादशभिः १२ सवर्णितंजातं भागस्थानेरूपं १ हरस्थानेद्वादश अतउक्तंद्युपिंडोऽर्कभक्तइति अ
स्माद्गतिमपास्यशेषं ०।०।०।५९।१२५।४३ इदंसप्ततिसवर्णितंजातंकलास्थानेरूपं १ हरस्थानेसप्ततिः ७० पूर्वखंडम
धिकंगृहीतं अतउक्तं खशैलाप्तलिप्ताविहीनइति अथशुक्रकेंद्रंसाधयति त्रिनिघ्नाद्द्युपिंडाद्द्विधेतित्रिभि ३ र्हन्यतेगुण्यते

एवंभूतोयोद्युपिंडोऽहर्गणस्तस्मात् द्विधास्थानद्वयेस्थापितात् एकत्रअक्षैःपंचभि ५ रन्यत्रचक्रिभाब्जैःकुरेकःइभाअष्टौ अब्जएकः एभिरंकाशीत्यधिकशतमितैरंकैः १८१ अवाप्तांशयोगःअवाप्ताःलब्धायेअंशास्तेषांयोगोभृगोःशुक्रस्यशीघ्रकेंद्रंभवति अत्रोपपत्तिः शुक्रशीघ्रकेंद्रस्यगतिः ०।३६।५९।४०।६।३७ अनयागणोगुण्यः अत्रैकंखंडं ०।३६ इदंपंचभिःसवर्णितंजातंभागस्थानेत्रयं ३ हरस्थानेपंच ५ अतउक्तंत्रिनिघ्नाद्द्युपिंडात् अक्षभक्तात् अवाप्तांशा इति अवशिष्टंखंडं ०।०।५९ ४०।६।३७ इदमेकाशीत्यधिकशतेन १८१ सवर्णितं अत्रापिजातंभागस्थानेत्रयं ३ उभयत्रापिगणस्त्रिभिर्गुण्यःएकत्रपंचभि ५ र्भाज्यएकत्रचैकाशीत्यधिकशतेन१८१ भाज्यः फलैक्यंकार्यमेवयतःपूर्व

खाग्न्युद्धृतोदिनगणोंशमुखःशनिःस्यात्षट्पंचभूहृतगणात्फललिप्तिकाढ्यः ॥
गोक्षागजारविगतिःशशिनोऽग्रगोश्वाःपंचाग्नयोथषडिलाग्धयउच्चभुक्तिः ॥ १४ ॥

खंडंन्यूनंगृहीतमस्ति अतएवोक्तंत्रिनिघ्नाद्द्युपिंडादित्यादि ॥ १३ ॥ अथेदानींश्लोकार्धेनशनिंसाधयति खाग्न्युद्धृत इति दिनगणोऽहर्गणःखाग्निभिस्त्रिंशद्भि३० रुद्धृतो भक्तःसन् अंशमुखोभागाद्यःशनिःस्यात् किंविशिष्टःषट्पंचभूहृद्गणात् षट्पंचाशदधिकशत १५६ भक्ताहर्गणात्याःफललिप्तिकाः यत्कलादिद्विस्थंफलं तेनआढ्योयुक्तःशनिःस्यादित्यर्थः अत्रोपपत्तिःशनेर्मध्यमागतिः ०।२।०।२३।४।३७ अनयागत्याअहर्गणोगुण्यइतिअत्रैकंखंडंगृहीतं ०।२ इदंत्रिंशतासवर्णितंभागस्थानेरूपं १ जातंतस्याविकृतत्वात् खाग्न्युद्धृतोदिनगणइत्युपपन्नंएतत्खंडंगतेरपास्यशेषं

०।०।०।२३।४।३७ इदंषट्पंचाशदधिकशतसवर्णितंजातं कलास्थानेरूपं १ तस्याप्यविकृतत्वात् षट्पंचभूहद्गुणादि
त्युक्तंफलयोर्योगःकार्योगतःपूर्वखंडंगतेरूनंधृतं अतउक्तंफललिप्तिकाढ्यइति ॥ १४॥ एवंरेखार्कोदयकालीनान् मध्य
मान्ग्रहान् प्रसाध्येदानींसार्द्धश्लोकेनमध्यमग्रहाणांदिनगतीःकलाद्यावदति गोक्षाइति राहोरिति इयंकलाद्यारविग
तिःगोऽक्षाःगावोनवअक्षाःपंचएवमेकोनषष्टिः५९ कलाः गजाअष्टौ८ विकलाःशशिनश्चंद्रस्येयंगतिःअभ्रगोश्वाः
अभ्रंशून्यंगावोनवअश्वाःसप्त एवंनवत्यधिकशतसप्तकमिताः७९० कलाः पंचाग्नयःपंचत्रिंशत्३५ विकलाः अथश
ब्दोऽनंतरवाचीचंद्रगतिकथनानंतरं इयंउच्चभुक्तिःचंद्रमंदोच्चगतिःषट्६ कलाः इलाएकः अब्धयश्चत्वारः एवमेकच

राहोस्त्र्यंकुशशिनोऽसृजइंदुरामास्तर्काश्विनोज्ञचलकेंद्रजवोऽर्यहिक्ष्माः ॥
लिप्ताजिनाविकलिकाश्चगुरोःशराःखंशुक्राशुकेंद्रगतिरद्रिगुणाःशनेर्द्वे ॥ १५ ॥

त्वारिंशत्४१ विकलाः राहोःइयंगतिःत्र्यं ३ कलाः कुशशिनः एकादश११ विकलाः असृजोभौमस्यइंदुरामाः
एकत्रिंशत्३१ कलाः तर्काश्विनस्तर्काःषट्अश्विनौद्वौ एवंषड्विंशतिः२६ विकलाःज्ञस्यबुधस्ययच्चलकेंद्रंशीघ्रकेंद्रंतस्य
जवोगतिरियंअर्यहिक्ष्माः अरयःषट् कामक्रोधादयः अहयःअष्टौ क्ष्माएकः एवंषडशीत्यधिकशतमिताः १८६ क
लाःजिनाश्चतुर्विंशतिः२४विकलाःगुरोर्बृहस्पतेःशराःपंच५ कलाः खंशून्यं०विकलाःशुक्रस्ययदाशुकेंद्रंतस्यगतिःअ
द्रिगुणाः अद्रयःसप्तगुणास्त्रयः एवंसप्तत्रिंशत्३७ कलाःविकलाभावः शनेर्द्वे २ कले तस्यापिविकलाभावःएताःग्रहा

णांमध्यमगतयः प्रत्यहंमध्यम ःग्रहाःएताःकलाःपूर्वंगत्याक्रामन्तीतिभावः आसांगतिकलानांज्ञानोपायवासनापूर्व मेवप्रतिपादितास्ति तथापि बालावबोधार्थंविस्तार्योच्यते रूपमहर्गणंप्रकल्प्यरुवैर्ग्रहाःपूर्वोक्तवन्मध्यमाःसाधिता स्ताएवगतिकलाः राशिवृत्तस्यएतावतीःकलाः प्रत्यहंप्राच्यांगृहाःपृथक्पृथक् स्वस्वकक्षायांक्रामन्तीतिभावः तत्क थंराशिमण्डलंप्रवाहानिलेक्षिप्तं अतिवेगेननियतंपश्चिमाभिमुखंभ्रमति शीघ्रमंदभेदेनभिन्नगत्याग्रहाविचरंतीतियद्ये वंतर्हितेषांग्रहाणामेकमार्गस्थानांमध्यमगतेःशीघ्रत्वमंदत्वमित्यन्यथात्वंकथंसंभवतीति अतः पृथक्पृथङ्मार्गगता भ्रमन्तीतिभावः गतेर्विसदृशत्वंकस्मादित्युच्यते योहिभूमेरासन्नःसस्वल्पेनकालेनभगणंभुंक्तेतस्यशीघ्रगतित्वं संभवतियोहिदूरगःसमहताकालेनेति तस्मात्तस्यमंदगतित्वमिति एकस्मादेकस्मादन्योऽन्योमंदगतिःसंभवति त थाचोक्तंसिद्धांतशिरोमणौ "कक्षाःसर्वाअपिदिविषदांचक्रलिप्तांकितास्तावृत्तेलघ्व्यो लघुनिमहतिस्युर्महत्यश्चलिप्ताः। तस्मादेतेशशिजभृगुजादित्यभौमेज्यमंदामंदाक्रांताइवशशधराद्भांतियांतःक्रमेणे "ति एवंग्रहाणांकक्षाःसप्तग्रहकक्षो परि अष्टमंनक्षत्रमंडलं तत्रसमाद्वादशराशयः तदंशास्तेक्षेत्रांशास्तस्यपूर्वाभिमुखनियतगतेरभावः प्रवहानिला क्षिप्तं पश्चिमाभिमुखमेवपरिभ्रमतीतितद्राराश्यंशकलाद्यवयवभोगवशात् ग्रहाणांशीघ्रमंदत्वमुक्तं ननुयोहियो जनात्मकोदिनगतिर्मार्गः ससर्वेषांग्रहाणांसमानएवअतएवाहभास्करः समागतिस्तुयोजनैर्नभःसदांसदाभवेत्। कलादिकल्पनावशामृदुर्द्रुताचसास्मृते" ति अत्रभचक्रंएकत्रस्थिरत्वेनस्थातुंनशक्नोतिअतः किंचित्प्राक्पश्चादपिचल तीत्यवगम्यते कस्मात्विषुवायनचिह्नोदयस्थानानांनैकत्वावस्थितत्वात् विषुवायनचिह्नानिस्वदेशस्थानादतिक्रांता

निदृश्यंतेतदाचक्रंप्रत्यक्चलितंभवति अनागतप्राक्तानितदाप्राक्चलितामितिज्ञेयं अतउक्तंसूर्यसिद्धांते "प्राक्च
क्रंचलितंहीनेछायार्कात्करणागते । अंतरांशैःसमावर्त्यपश्चाच्छेषैस्तदाधिके" इति कस्मात्स्थानात्प्राक्पश्चाच्च
लितंदृश्यतेयथायत्रविषयेदक्षिणोत्तरध्रुवौक्षितिजस्थौभवतः सनिरक्षदेशस्तस्मिन्समंयत्पूर्वापरवृत्तंतद्विषुववृत्तसंज्ञंततो
यस्मिन्मार्गेरविःपूर्वगत्याद्वादशराशीन् भुंक्तेतद्वृत्तस्यक्रांतिमंडलसंज्ञाकृताएवमुभयोःक्रांतिवृत्तविषुववृत्तयोः षड्भांत
रेपातद्वयंवर्ततेसौसंपातोराशिमंडलेमेषादितुलादिसंज्ञौज्ञेयौतयोर्विषुवत्संपातयोःप्रागपरत्रक्षितिजस्थयोःस्त्रिभेतद्विषुव
वृत्ताद्दक्षिणोत्तरतश्चतुर्विंशत्यंशांतरेक्रांतिस्तद्दक्षिणोत्तरवृत्तयोःसंपातद्वयंतन्मृगकर्कादिसंज्ञंअनयोरयनचिह्नसंज्ञाकृता
एवंविषुवायनचिह्नचतुष्टयंराशिमंडलस्थंप्रत्यग्भ्रमणवशात् क्षितिजेयत्रोदेतितत्रतत्रक्षितिजेऽवितेषांताएवसंज्ञाःकृताः
तस्माद्भचक्रंचलितमित्यवगम्यते यथासर्वोपरिराशिमंडलंतत्रद्वादशराशीन्समानान्सावयवान्परिकल्प्यभूमध्या
त्तदवयवप्रापीनिसूत्राणिसंलक्ष्याणि यस्मिन्यस्मिन्सूत्रेस्वकक्षास्थितोग्रहस्तिष्ठतिसतस्मिन्राशौतदंशाद्यवयवस्थोज्ञे
यः एवंश्रीब्रह्मणाराशिचक्रंसनक्षत्रंतदधिष्ठितग्रहकक्षासहितंदक्षिणोत्तरध्रुवयोर्बद्धातत्रसर्वान्ग्रहान्मेषादिचिह्नसूत्र
गान्संस्थाप्य एवंभचक्रंसृष्ट्वाप्रवहानिलस्यपश्चिमाभिमुखभ्रमत्वेनियुक्तं ग्रहास्तुपूर्वाभिमुखभ्रमत्वेनियुक्ताः ततःसर्वेग्र
हाःस्वस्वमार्गंप्रत्यग्भ्रमंतोपिपूर्वाभिमुखंएकादशसहस्राणि अष्टशतानिच पादोनषष्टिसहितानियोजनानिपूर्वाभिमुखंप्र
त्यहंगंतुंप्रवृत्ताः उक्तंचसृष्ट्वाभचक्रमित्यादि तत्रस्वस्वकक्षास्थितलिप्तानांलघुमहत्त्वात् लिप्तावशेनशीघ्रमंदत्वमुच्चवशेनच
गतीनामुपपन्नंतत्रभचक्रस्यप्राक्पश्चात्चलनंतेऽयनांशाएवतद्वशेनतत्रस्थितराशीनांविषुववृत्तात् दक्षिणोत्तरदूरासन्न

त्वंयावद्भिरंशैर्भवतितेषामंशानांक्रांतिसंज्ञा तत्रक्रांतिवशेनयत्कर्मक्रियतेतत्सायनगृहादेवकर्तुंप्रयुज्यते तेषामवस्थितिर
यनांशाः येषांमतेराशिचक्रंभचक्रादन्यत्रस्थितंतेषांसाधनमेवप्रमाणं स्वस्वगतिकलानामुपपत्तिरेवमपिसंक्षिप्तोक्ता पूर्वंप्र
तिपादितप्रमेयाच ॥ १५ ॥ अथकस्मिन्पक्षेकोग्रहोघटतेइत्येकवृत्तेनाह सौरइति अर्कः सूर्यःसौरःसौरपक्षी
योघटतइतिसर्वत्र विधूच्चमपिसौरपक्षीयं अंककलाभिर्नव९कलाभिरूनोऽब्जश्चंद्रःसौरपक्षीयः गुरुरार्य
जआर्यपक्षीयोगुरुरित्यर्थः असृग्राहूमंगलराहूचार्यपक्षीयौ केब्रह्मपक्षेजायतेतत्तथाएवंभूतंज्ञस्यबुधस्यकेंद्रं

सौरोर्कोपिविधूच्चमंककलिकोनाब्जोगुरुस्त्वार्यजोसृग्राहूचकजंज्ञकेंद्रकेमथार्येसेषु-
भागःशनिः ॥ शौक्रंकेंद्रमजार्यमध्यगमितीमियांतिदृक्तुल्यतांसिद्धैस्तैरिहपर्वधर्म
नयसत्कार्यादिकंत्वादिशेत् ॥ १६ ॥

अथशब्दोनंतरवाची आर्येआर्यपक्षे शनिःसेषुभागःपंच५भागयुक्तोघटते शुक्रस्येदंशौक्रंएवंभूतंयत्केंद्रंतत्अ
जार्यमध्यगं अजोब्रह्माआर्यःप्रसिद्धःअनयोःपक्षौतयोर्मध्येगच्छतीतितथा उभयोःपक्षयोःप्रसाध्यतद्योगार्द्धंतुल्यंघट
तइत्यर्थः इतितेभ्यःपक्षेभ्यःसाधिताइमेग्रहाः दृशितुल्यतांदृग्गणितैक्यंयांतिप्राप्नुवंतीतिएवंग्रहणोदयास्तजातका
दौग्रहाणांसाधनंबहुभ्योग्रंथेभ्यःकर्तव्यमितिजडकर्मंदृष्ट्वा आचार्योलाघवार्थमिमंग्रंथंकृतवान् तैर्ग्रहैरिहास्मिन्ग्रंथे
सिद्धैःपर्वधर्मनयसत्कार्यादिकं पर्वग्रहणं धर्मोयज्ञानुष्ठानेकादशीव्रतादिकः नयोनीतिःराजनीतिदंडनीत्यादिकः

सत्कार्यंशुभकार्यंव्रतबंधविवाहादि एभ्योग्रंथेभ्यःएतदुत्पन्नतिथ्यादेरेवादिशेत् अयंभावः एकादश्यादिनिर्णयः अस्मादेवतिथेःकार्यः जातकादिषुसर्वत्रग्रहाःअत्रत्याएवग्राह्याः यतोयस्मिन्पर्वास्मन्कालेयद्दृग्गणितैक्यकृत्त देवग्राह्यं घटमानत्वात् अत्रयुक्तिर्ग्रहांतरलक्षणोपायश्चपूर्वमेवप्रतिपादितोस्ति ॥ १६ ॥ दैवज्ञवर्यस्यदिवाकरस्यसु तेनमल्लारिसमाह्वयेन ॥ वृत्तौकृतायांग्रहलाघवस्यजातंखगानामितिमध्यकर्म ॥ ॥ इतिश्रीगणेशदैवज्ञकृतग्रहला घवस्यटीकायांमल्लारिदैवज्ञविरचितायांमध्यमग्रहसाधनाधिकारःप्रथमःसमाप्तः ॥ १ ॥ ॥ ॥ ॥
॥ अथरविचंद्रस्पष्टीकरणपंचांगानयनाधिकारोव्याख्यायते ॥ ॥ तत्रादौभुजकोटिपदार्कमंदोच्चानांसाधनमे

दोस्त्रिभोनंत्रिभोर्ध्वंविशेष्यंरसैश्चकृतोऽकाधिकंस्याद्भुजोनंत्रिभम् ॥
कोटिरकैःकैकंत्रित्रिभिःस्यात्पदंसूर्यमंदोच्चमष्टाद्रयोंशाभवेत् ॥ १७ ॥

कवृत्तेनाह दोरिति त्रिभाद्राशित्रयाऽदूनंयत्केंद्रंग्रहादिवासएवदोर्भुजःस्यात् त्रिभात्राशित्रयात्ऊर्ध्वंचेत्षड्भात्रा शिषट्कात्शोध्यःभुजःस्यात् षड्भादधिकश्चेत्षड्राशिरहितःभुजःस्यात् अंकतोनव ९ राशिभ्योधिकंचेत्तदाचक्रतोद्वादश राशिभ्यःशोध्योभुजःस्यात् भुजोनंभुजेनऊनंत्रिभंराशित्रयंकोटिःस्यात्त्रित्रिभैस्त्रिभिस्त्रिभीराशिभिरकैकंपदंस्यात् तद्यथा प्रथमंराशित्रयंविषमंपदंस्यात् ततोद्वितीयंसमपदं ततस्तृतीयंविषमंपदं चतुर्थंसमपदमित्यर्थः अत्रोपपत्तिः तत्रा दौदोर्ज्याकोटिज्यास्वरूपमुच्यते समायांभूमौइष्टंत्रिज्याव्यासार्द्धेनवृत्तंदिगंकितंकृत्वाषष्ट्यधिकशतत्रयमितान् ३६०

भागानङ्कयेत् तत्रतिर्यगूर्ध्वरेखेच एवंचतुर्भागाःस्युस्तेषांपदसंज्ञा एवंचक्रेचत्वारिपदानि तत्रैकैकस्मिन्पदेनवतिन
वतिभागाः प्रथमपदेयद्गतंसएवदोः द्वितीयेएष्यंदोःएष्यत्वार्थंषड्भशुद्धं उक्तंचसिद्धांतशिरोमणौ "अयुग्मपदेयातमेष्यंतु
युग्मेभुजोबाहुहीनंत्रिभंकोटिरुक्ते " ति अत्रदोर्ज्याकोटिज्येएकपदमध्ये अतोदोस्त्रिभात्शुद्धःकोटिर्भवतीतियुक्तमुक्तं
एवंभुजकोटिपदान्प्रसाध्येदानींसूर्यमंदोच्चंवदति सूर्यमंदोच्चमिति सूर्यस्यमंदोच्चंअष्टाद्र्योष्टसततिं ७८ मिताभा
गाभवेत् राशिद्वयमष्टादशभागा २ । १८ इत्यर्थः अत्रोपपत्तिः अहर्गणात्साधितोयोग्रहःसमध्यमः यतोयंत्रवे
धेनाकाशेविलोक्यमानेतावान्ग्रहोनदृष्टः किंचिदंतरंदृष्टं प्रत्यहंगतेर्विसदृशत्वात् एवंप्रत्यहंग्रहान्गोलेनचक्रयंत्रेणवा
विद्ध्वा अहर्गणोत्पन्नमध्यमग्रहवेधितस्पष्टग्रहयोरंतराणिसाधितानि एवप्रत्यहंग्रहाणांयाम्योत्तरगमनानिक्रांतिमं
डलाद्यावद्भागमितानिदृष्टानितानिशरसंज्ञानिज्ञातानि एवंपरमशरपरमाल्पशरयोर्योगार्द्धंमध्यमःशरोज्ञातः तएव
ग्रहाणांशराःअग्रेआचार्येणोदयास्ताधिकारेपठिताःसंति ततोऽनुपातेनेष्टशरःप्रसाधितोऽस्ति सयथा यदि
त्रिज्यातुल्यसपातग्रहदोर्ज्याएतेशरास्तदेष्टदोर्ज्ययाकइति एवंदोर्ज्यात्रिज्याभक्तापठितशरगुणाइष्टशरःस्यात् सो
पिग्रहस्थानोयः ग्रहस्थानानित्रीणितद्वृत्तानिच मध्यमोग्रहःमंदप्रतिमंडलेस्तीतिकल्पना मंदस्पष्टोग्रहःशीघ्रप्र
तिमंडलेभ्रमतीति स्पष्टोग्रहःस्वस्वविमंडलेऽस्तीतिकल्प्यते शरःसाधितोमंदस्पष्टग्रहात् यतःपाताःप्रतिमंडलस्थावे
धिताःसंति अतःशराःशीघ्रप्रतिमंडलस्थाग्रहस्थानीयास्तत्रशीघ्रकर्णोव्यासार्द्धं तदग्रेशराःसाधितास्तेतुत्रिज्याग्र
स्थानीयाःकार्याः ज्यारूपत्वात् अतोद्वितीयोनुपातः यदिशीघ्रकर्णाग्रेअयंशरस्तदात्रिज्याग्रेकः पूर्वंत्रिज्या

हरः इदानींगुणः तुल्यत्वात्तयोर्नाशः एवंदोर्ज्यापठितशरगुणाशीघ्रकर्णभक्ताशरःस्यात् शीघ्रकर्णोनामकिंतदुच्यते
दोर्ज्याभुजःकोटिज्यांत्यफलज्ययोर्मृगकर्कादिकेंद्रयद्योगांतरंसाकोटिः तद्वर्गैक्यपदंकर्णः तस्यकर्णस्यत्रिज्यातः
परमनूनाधिकंयदंतरंसांत्यफलज्यैव तद्धनुः परमंफलमित्यर्थः अत्रशरादिलोमविधिनाकर्णःसाधितः सायथा दो
र्ज्यापठितशरगुणापरमाधिकशरेणपरमाल्पशरेणचभक्तासतोक्रमेणपरमाल्पपरमाधिकौशीघ्रकर्णौलभ्येते उभयत्र
त्रिज्ययासहांतरेकृतेजातापरमशीघ्रफलज्यातुल्यैव तस्याःधनुःपरमंशीघ्रफलं एवंयद्दिनजाच्छरादेवंशीघ्रफलंसा
धितं तद्दिनमध्यग्रहस्पष्टग्रहांतरमपिज्ञात्वेदमंतरंपरमफलं शीघ्रफलंतुल्यंनासीत् अतोन्यत्फलंकल्प्यं मध्यस्प
ष्टांतरंफलयोगः अस्मात्परमंशीघ्रफलंविशोध्यजातंद्वितीयंफलं तस्यमंदफलसंज्ञाकृता एवंप्रत्यहंविलोक्यमानेय
स्मिन्दिनेपरमंमंदफलंतस्यग्रहस्यदोर्ज्यात्रिज्याभूत् पुनर्दृष्टप्रतीत्यर्थंविलोक्यमानेपरमफलस्थानेदोर्ज्याग्रहस्यत्रि
ज्यातुल्यात्नाभूत् परमफलंदिनेदोर्ज्यात्रिज्यातुल्ययाभवितव्यं परमत्वात् सानजाता अतस्तस्मिन्ग्रहेतथोनं
कार्यं यथाराशित्रयंभुजःस्यात् यन्न्यूनंकार्यंतस्यचसंज्ञामंदफलशीघ्रफलानयनेमंदोच्चशीघ्रोच्चसंज्ञेकृते पुनर्विलोक्यमा
नेतावतोच्चेनपरमत्वंनभवति अतस्तस्योच्चस्यमंदगतिर्ज्ञाता तत्रोपायोयथा अद्यतनश्वस्तनमंदस्पष्टग्रहयोरंतरालं
स्पष्टगतिः एवमुभयोरुच्चयोरंतरंकृत्वानुपातःकृतः सयथा यद्येभिःपरमफलांतरदिनैःएतावत्यउच्चान्तरकलालभ्यंते
तदेकेनदिनेनकेतीज्ञातेमंदोच्चशीघ्रोच्चगतो एवंमंदोच्चगतोश्चंद्रस्यैव अन्येषांवर्षेणापिविकलानोत्पद्यते अस्याः
गतेःकल्पेउच्चभगणाःपठितास्तेयथा यद्येकदिनेनैतावतीगतिस्तदाकल्पकुदिनैःकिमिति एवंप्रसाध्योच्चभगणाः सिद्धाः

पाठपठितास्तथैवसूर्यस्यकर्ममंदोच्चभगणाः ४७।० कल्पसौरवर्षैरेतेभगणालभ्यंते तदाकल्पगताब्दैःकिमिति अनु
पाताद्ग्रन्थाद्रौरवेर्मंदोच्चं २।१७।५६।४१ सतभिर्वर्षैःरवेर्मंदोच्चगतिरेका१विकलालभ्यते अतआचार्येणस्थिरंनिब
द्धंवहुकालेनयेगणकतिलकाउत्पत्स्यंतेतेअनेनैवानुपातेनरचयिष्यंति एवंमंदोच्चशीघ्रोच्चवासनासर्वेषांग्रहाणांसंक्षिप्तो
क्ता ग्रंथविस्तरभयात् ॥ १७ ॥ एवंसूर्यमंदोच्चमुक्त्वेदानींकेंद्रंसूर्यमंदफलसाधनंचैकवृत्तेनाह मंदोच्चमि
ति ग्रहेणवर्जितंहीनंयन्मंदोच्चंतत्तदाख्यंमंदमेवआख्यानामयस्येति मंदकेंद्रंबुधैरतींद्रियदृग्भिराचार्यैर्निगदितंप्रोक्तं

मंदोच्चंग्रहवर्जितंनिगदितंकेंद्रंतदाख्यंबुधैःकेंद्रेस्यात्स्वमृणंफलंक्रियतुलाद्येऽथोविधेयंरवेः ॥
केंद्रंतद्भुजभागखेचरलवोनघ्नानखास्तेपृथक्तद्भोंशोननगेषुभिःपरिहतास्तेंशादिकंस्यात्फलम् १८

क्रियतुलाद्येकेंद्रे क्रियोमेषस्तुलाप्रसिद्धा एतदाद्येकेंद्रफलंमंदफलंशीघ्रफलंवक्ष्यमाणंस्वमृणंस्यात् एतदुक्तंभवति केंद्रे
मेषादिषड्राशिस्थेफलंधनं तुलादिषड्राशिस्थेफलंऋणं अत्रकेंद्रवासनायदोच्चस्याल्पगतित्वात् ग्रहगतिवाहुल्या
च्चमंदोच्चरहितोग्रहःकृतस्तस्यकेंद्रसंज्ञा अत्रमुहुर्व्यावृत्तितःकेंद्रशब्दस्यार्थोनजायते केंद्रशब्देनवृत्तस्यमध्यमुच्य
ते अथग्रहस्फुटस्थानंज्ञातुंबुद्धिमद्भिराद्यैरतींद्रियदृग्भिर्यंत्रादिवेधेनवृत्तत्रयंकल्पितं तेषांयानिमध्यचिह्नानितानिकेंद्रसं
ज्ञानि ' वृत्तस्यमध्यंकिलकेंद्रमुक्तमि ' तिभास्कराचार्यवचनात् प्रथमंकक्षावृत्तंतत्परिधौद्वितीयंमंदनीचोच्चवृत्तं तत्प
रिधौतृतीयंशीघ्रनीचोच्चवृत्तं तत्परिधौग्रहः सभूमध्याद्राशिमंडलगामिसूत्रस्थोयस्मिन्राश्यवयवेदृश्यते तत्रस्थःस्फुटो

ज्ञेयः कक्षापरिधिस्थितमंदनीचोच्चवृत्तपरिधौशीघ्रनीचोच्चवृत्तमध्यपरिधिज्ञानायमंदकेंद्रंकल्पितं भूमध्याद्दूरेनीचोच्चवृ
त्तस्ययःप्रदेशस्तस्योच्चसंज्ञा तदुक्तं यावद्ग्रहाद्विशोध्यते तावन्मंदनीचोच्चवृत्तयोरंतरज्ञानंभवति तस्मादपिशीघ्रनीचो
च्चवृत्तपरिधावस्थितस्फुटज्ञानायशीघ्रकेंद्रंकल्पितं तस्मिन्केंद्रचिह्नेग्रहस्तिष्ठतीतिभावः यद्यप्यत्रग्रहभगणापेक्षयामंदो
च्चभगणाअल्पाइतिमंदोच्चेनहीनोग्रहोमंदकेंद्रमितिवक्तुमुचितं तथापिग्रहवर्जितमुच्चंकेंद्रमितियदुक्तंतदपिभगणानांप्र
योजनाभावाद्दोर्ज्यादिसाम्येनफलेऽपिवैलक्षण्याभावादेकोक्त्यामांदचलफलयोर्धनर्णताकथनलाघवाच्चयुक्तमेवेतिध्ये
यं एवंकेंद्रवासना अथकेंद्रकथनानंतरंरविमंदफलंसाधयति तद्भुजभागखेचरलवोनघ्नानखाइति तस्यरविमंदकेंद्रस्यये
भुजभागास्तेषांयःखेचरलवोनवमांश ९ स्तेनऊनायेनखाविंशति२० मितास्तेतैनैवनवमांशेनगुण्यास्ततस्तेपृथक् अन्य
त्रैकांतेस्थाप्यास्तेषांगोंशेननवमांशेनोनायेनगेषवःसप्तपंचाशत् ५७ तैर्लब्धांशैःपरिहृताभक्तास्तेपृथक्स्थाःअंशादिकं
भागादिकंरवेर्मंदफलंस्यात् अत्रोपपत्तिः समायांभूमावभीष्टत्रिज्यामितेनकर्कटेनवृत्तमालिख्यदिगंकितंकुर्यात् पूर्वा
त्प्रभृतिमेषादीन्राशीन्परिकल्प्य राशौचत्रिंशद्भागानंकयेत् ततोग्रहमंदोच्चंयत्रराशौभागेलिप्तायांवर्तते तत्रचिह्नंकृ
त्वा ततोभूमध्येयावद्रेखांकुर्यात् तत्रमध्याद्ग्रहपरममंदफलपरिणतंसूत्रंप्रतीत्यनिःसार्यचिह्नंकार्यं ततश्चिह्नात्पूर्वंकर्क
टेनयद्वृत्तमुत्पद्यते तन्मंदप्रतिमंडलं तस्ययत्रात्युच्चतातत्रोच्चव्यपदेशः एतदपिपूर्वपदात्युच्चतायांराश्यादिभिरंकयेत् एवं
स्थितेकक्षायांग्रहोयत्रवर्तते मध्यमस्तत्रचिह्नंकारयेत् ततोहिपरमंमंदफलं ज्याव्यासार्द्धेनतत्परिणतेनयद्वृत्तमुत्पद्यते

तन्मंदनीचोच्चवृत्तंतद्भागांकितंच ततःप्रतिमंडलोच्चप्रदेशात्तद्वृत्तमनुलोमंग्रहप्रवेशमानीयग्रहचिह्नेतस्यमध्यंकारयेत् ए
वंस्थितेपरितःप्रतिमंडलपरिधेश्चसंपातोयस्तत्रपारिमाथिकोग्रहः ननुसंपातत्रयंतिष्ठति तेषांमध्येकतमेनैवंभवितव्यं अ
त्रोच्यते उच्चरेखायाःकक्षामंडलपरिधेस्त्रयःसंपातास्तस्मादतिदूरेमध्यमोग्रहःस्थितस्तावत्येवदूरेप्रतिमंडलगतोच्चतोभुज
ज्यागृहीताकक्षामंडलप्रतिमंडलयोस्तुल्याभवति साभुजज्यास्वमंदपरिधिवृत्ते तच्चापंमंदफलं अत्ररवेर्मंदपरिध्यंशाः
१३।४३।४२अस्मादनुपातः यदिभांशपरिधे३।६० स्त्रिज्यामितं१२० व्यासार्द्धंलभ्यते तदाएषांपरिधिभागानांकिमि
ति तेषांत्रिज्या१२०गुणोभगणांशा३६०भागहारः अत्रगुणहारौगुणेनापवर्त्य हरस्थानेत्रयोलब्धास्तस्मात्त्रिभक्ताः
परिधयःपरिधानांव्यासार्धानांव्यासार्द्धानिस्युः ताःपरमफलज्याःएवंरवेःपरमफलज्या ४।३४।३४ अस्याधनुःसूर्यस्य
परमंमंदफलं २।१०।४५ एवंचंद्रादीनामपिपरममंदफलानिसाध्यानि इयंफलोपपत्तिःपूर्वोक्तफलयुक्तिमूला अथेष्टफलं
साध्यते तत्रत्रिज्यातुल्ययादोर्ज्यययायदेदंपरममंदफलम् तदेष्टकेंद्रदोर्ज्यययाकिमिति एवमिष्टफलानिसाध्यानि तत्रा
चार्येणास्मिन्ग्रंथेधनुर्ज्यैनसाधितेजीवांविनाफलादिसिद्धिर्नस्यात् भागेभ्यस्त्रैराशिकासंभवात् वृत्तक्षेत्रेयत्परिध्या
श्रितंतत्त्रैराशिकेननसिध्यति वर्गात्मकत्वात् अतएवाहभास्करः "वर्गेवर्गपदंघनंघनपदंसंत्यज्ययद्गण्यतेतत्त्रैराशिक
मि"ति अतोजीवांविनाफलसिद्धिर्न अत्रधनुर्ज्यैनक्रियेते इत्याचार्येणग्रंथादौप्रतिज्ञाकृतास्ति फलसिद्धिरितिकृता
स्ति तत्रकायुक्तिरितिकेचिदल्पमतयोऽत्रमुह्यंति अत्रोच्यते तत्राचार्येणजीवाप्रतिफलंखंडैर्विनाफलमध्येसाधितम
स्ति उक्तंच "कोटयंशवर्गेणतदंघ्रिणाचधियोनयुक्ताःखखभूगजाश्च८१००॥ आद्योगुणस्तेनगुणाःखसूर्या१२०स्त्व

न्योहरस्तेनहृताःक्रमज्याः" ॥ अथवा भुजभागानांनवांशेनऊनाहृताद्वाविंशतिः२२ सार्क१२० मितेव्यासार्द्धेक्रम ज्याभवति अत्राचार्येणरविमंदफलानयनेत्रिज्याशत १०० मिताधृता ततइष्टजीवासाधिता सायथा परमभुजांशा नवतिः ९० एषांनवांशेन १० विंशति २९ रूना १० ततस्तेनैवहृताजातात्रिज्या १०० एवमिष्टभागेभ्योऽपिइष्टाजी वास्यात् अतएवोक्तं तद्भुजभागखेचरलवोनघ्नानखाइति इयंत्रिज्याकेनभक्तापरमंमंदफलंस्यात् अतइयमेवपरम फलभक्ताजातोहारःसावयवः ४५।५३।२० अत्रलाघवार्थंनगेषवोगृहीताः अत्रहरांतर ११।६।४० मिदंनवभिःसव र्णितंजातमूर्ध्वस्थानेनिःशेषंशतं १०० सैवत्रिज्या एवंदोर्ज्यानवांशहीननगेषुभिर्भक्तालब्धंफलंस्यात् अतउक्तं तेपृ थगित्यादि अथधनर्णोपपत्तिमाह मंदप्रतिमंडलपरिधेर्मंदोच्चपरिधेश्चसंपाताद्यत्सूत्रंभूमध्यंनीयते तत्कक्षामंडलपरि धेश्चमध्यमग्रहादपरेणसंपातस्तत्रपारमार्थिकोग्रहः सचमध्यादूनोपरेणस्थितत्वात् मध्यग्रहस्यकक्षायाःसूत्रयोग स्यचयदंतरंतत्फलं अतस्तेनोनोमध्यमःस्फुटोभवति प्रथमपदेभुजज्यावर्धते फलमपिवर्धते द्वितीयपदेप्रथमानीतं फलमपचीयते तच्चाल्पंभवति पदादर्वाक्पदांतेचतुल्यंतुल्यत्वात् ऋणधनयोर्नांशेसतिफलाभावस्तृतीयपदेभक्तस्य भुजज्याभवति तत्रमध्यग्रहप्रदेशेप्रतिमंडलप्रदेशान्नीचोच्चवृत्तंयावदानीयते तस्यकक्षापरिधेश्चयःसंपातःसमध्यग्र हात्पूर्वेणैवभवति तस्यमध्यग्रहस्यचांतरंफलं तेनमध्यमोधिकःसन्स्फुटोभवति स्फुटग्रहात्तृतीयपदेभुजज्यावर्ध ते फलमपिवर्धते चतुर्थपदेफलमपचीयते पदांतेफलाभावः अतोमेषादिकेंद्रेधनमित्युपपन्नं परमिदंमृदूच्चेनहीनोग्र होमंदकेंद्रमितिपक्षेचकल्प्यते इहतुकेंद्रस्यैवव्यत्यस्तत्वाद्धनर्णत्वयोरपिव्यत्यासेनभाव्यं अतउक्तं "केंद्रस्यात्स्वमृणं

फलंक्रियतुलाद्य "इति ॥१८॥ एवंरविमंदफलंप्रसाध्येदानीमेकवृत्तेनचंद्रफलंसाधयति विधोरिति विधोश्चंद्रस्ययत्केंद्रं तस्यदोष्णोभुजस्यभागास्तेषांषष्ठेनषड्ंशेनऊनारहितानिघ्नागुणितात्रखरामास्त्रिंशत्३० तेपृथक्भिन्नस्थानेस्थाप्याः तेषांपृथक्स्थानीयोनखांशोविंशत्यंशस्तेनोनितैःरसाक्षैःषट्पंचाशद्भिः ५६ तेपृथक्स्थाहताभक्ताःसंतोलवाद्यंभागाद्यं त्रिस्थंचंद्रमंदफलंस्यात् स्वस्वमंदफलाभ्यांसंस्कृतौस्पष्टौरतः अत्रोपपत्तिः परमंचंद्रफलंभागाद्यं५।१।४०अत्रचंद्रमंदफलानयनेत्रिज्यापंचविंशत्यधिकशतद्वयमिताधृता यावद्यावदधिकातावत्तावत्फलस्यसूक्ष्मत्वं अतःसूक्ष्मत्वार्थ

विधोःकेंद्रदोर्भागषष्ठोननिघ्नाःखरामाःपृथक्तन्नखांशोनितैश्च ॥
रसाक्षैर्हतास्तेलवाद्यंफलंस्याद्रवींदूस्फुटौसंस्कृतौरतश्चताभ्याम् ॥ १९ ॥

मेतावतीत्रिज्या २२५ परमभागानवतिः९० अत्रैषांभुजभागानांषड्ंशेन१५ऊनास्त्रिंशत्१५ततस्तेनैवहतापरमदोर्ज्याभवति२२५ एवमिष्टभागेभ्योपीष्टजीवाभवति अतउक्तं "केंद्रदोर्भागषष्ठोननिघ्नाःखरामा"इति सात्रिज्याकेनभक्तापरमंदफलंस्यादितिज्ञानार्थंपरमफलेनैवभक्ताजातोहरःसावयवः४४।४५।० अस्रौसावयवोऽतो लाघवार्थंरसाक्षागृहीताः अनयोरंतरं११।१५।०एतद्विंशत्या२०सवर्णितंत्रिज्याभवति२२५ अतएवोक्तं "तन्नखांशोनितैःरसाक्षैर्हता"इति स्वस्वमंदफलसंस्कृतावेवसूर्येंदुस्फुटौभवतस्तयोःशीघ्रफलाभावात् ॥ १९ ॥

एवंसूर्यचंद्रयोःस्फुटत्वमुक्त्वेदानींतयोर्गतिस्पष्टीकरणमेकवृत्तेनाह केंद्रस्येति केंद्रस्यरवेर्वाचंद्रस्ययन्मंदकेंद्रंतस्यको
टिलवाभुजोनंत्रिभंकोटिस्तस्यालवाःभागास्तेषांयःखाश्विलवोविंशत्यंशस्तेनऊनाहीनानिघ्नागुणिताश्च रुद्राएकादश
११ कार्याः ततस्तेचेद्रवेस्तदात्रिकुभिस्त्रयोदश १३ भिर्हताभक्ताःसंतोरवेर्गतिफलंकलाद्यंस्यात् शशिनश्चंद्रस्यचेत्तार्हि
द्विनिघ्नाद्वाभ्यांहन्यतेगुण्यतेतथाभूताःसंतःस्वांगांशकेनसहितायुक्तास्तेचंद्रगतेःफलं तत्फलद्वयंस्वस्वमध्यमगतौकुली
रमृगषट्कगतेकेंद्रे कुलीरःकर्कः मृगोमकरः ततःषट्के धनर्णंकार्यं कर्कादिषड्राशिस्थेकेंद्रेधनं मकरादिषड्राशिस्थेकेंद्रे
ऋणंकार्यं सागतिःस्फुटाभवतीत्यर्थः अत्रोपपत्तिः अद्यतनश्वस्तनस्पष्टग्रहयोरंतरंस्पष्टगतिस्तथाद्यतनश्वस्तनयोर्ग्रहफ

केंद्रस्यकोटिलवखाश्विलवोननिघ्नारुद्रारवेस्त्रिकुहृताःशशिनोद्विनिघ्नाः ॥
स्वांगांशकेनसहिताश्चगतौधनर्णं केंद्रेकुलीरमृगषट्कगतेस्फुटासा ॥ २० ॥

लयोरंतरंगतिफलं तज्ज्ञानार्थमुपायः प्रथमपदादौभुजज्याशून्यं तत्रग्रहफलमपिशून्यं तत्रकोटिज्यापरमा
तत्रगतिफलमपिपरमं यथायथाग्रहफलस्यवृद्धिस्तथातथागतिफलस्यापचयोदृश्यते एवंकोटिज्यायाःपरमत्वेगति
फलस्यपरमत्वं कोटिज्याभावेगतिफलाभावः अतःकेंद्रकोटिज्यातोगतिफलसाधनंकर्तुंयुज्यते तद्यथा अत्रोभयत्रा
पित्रिज्यासपादैकोनविंशन्मिता २९।१५ धृता तत्साधनंयथा कोटिभागानांपरिमाणं ९० नखांशेन ४।३० ऊना
रुद्रास्ततोहताजातात्रिज्या २९।१५ एवमिष्टांशेभ्यइष्टास्यादेव अतएवोक्तं कोटिलवखाश्विलवोननिघ्नाइति
ततोदोर्ज्यातःफलसाधनं रवेःपरमंगतिफलं २।१५ त्रिज्या २९।१५ केनभक्तासतीदंस्यादतस्तेनैवत्रिज्याभक्ता

जातोहरस्त्रयोदश१३ अतोरवेस्त्रिकुहृताइति एवंचंद्रस्यपरमंगतिफलं६८।१५ अत्रदोर्ज्याकेनगुणितासती दं फलंस्यादतस्त्रिज्याभक्तंफलंजातंगुणस्थाने २।२० अत्रद्वावेवगृहीतौ अतउक्तं शशिनोद्विनिघ्नाइति एवंद्वि गुणत्रिज्यायांजातं ५८।३० अस्यपरमगतिफलस्यचांतरमिदं ९।४५षड्भिःसवर्णितंजातंतत्तुल्यमेव अतःस्वांगां शकेनसहिताइति तच्चंद्रगतेःफलं तत्फलद्वयंस्वस्वमध्यमगतौदेयं एवंस्फुटागतिः अथधनर्णोपपत्तिः तत्रतावदुच्चो नोग्रहःकेंद्रमित्यस्मिन्पक्षेमकरादिकेंद्रेग्रहस्यधनफलस्यापचयान्मृगादिकेंद्रेगतिफलमृणंवर्द्धते मेषादिकेंद्रेग्रहस्य ऋणफलवृद्धौसत्यांमेषादिकेंद्रेगतिफलमृणमपचीयते अतोमृगादिकेषड्भेकेंद्रेगतिफलमृणं कर्कादिकेंद्रेग्रहस्यऋणफ

मेषादिगेसायनभागसूर्येदिनार्द्धभायापलभाभवेत्सा ॥

त्रिस्थाहतास्युर्दशभिर्भुजंगैर्दिग्भिश्चराद्र्धानिगुणोद्धृतांत्या ॥ २१ ॥

लह्रासेगतेर्धनफलंवर्धते तुलादित्रयेकेंद्रेग्रहधनफलवृद्धौगतेःफलमपचीयते अतःकर्कादिषट्केधनमितियुक्तं ग्रहोन मुच्चंकेंद्रमित्यस्मिन्नपिपक्षेमकरादित्रिकेऋणफलवृद्धिर्मेषादित्रिकेधनफलह्रासः अतोमकरादिषड्भेगतिफलमृणमेव एवंकर्कादिषट्केधनमिति अतोयुक्तमुक्तं धनर्णेकेंद्रेकुलीरमृगषट्कगतेइति ॥ २० ॥ एवंरविचंद्रगतिस्पष्टीकरणंकृत्वे दानींपलभांचरखंडकानिचैकवृत्तेनाह मेषादिगइइ अयनस्यभागाअयनांशाःअग्रेवक्ष्यमाणास्तैःसहवर्तमानो युक्तोयःसूर्यस्तस्मिन्सूर्येमेषादिगेराशिभागकलादिनाशून्यमितेसति तस्मिन्दिनेदिनार्द्धेमध्याह्नेसमभुविद्वादशांगु लशंकुर्निवेश्यः शंकुलक्षणमुक्तंभास्करेण ‘ समतलमस्तकपरिधिर्भ्रमसिद्धोदंतिदंतजःशंकुरि ’ ति एवंतस्यशंकोर्मध्या

ह्नेभाछायायाभवति सापलभाभवेदित्यर्थः सापलभात्रिस्थात्रिषुस्थानेषुतिष्ठतीतित्रिस्था दशभिः१० भुजंगैरष्टभिः८ दिग्भिः१० हतागुणिता ततोऽतिमागुणैस्त्रिभि३रुद्धृताभक्तासतीत्रीणिचरखंडकानिभवंति अत्रोपपत्तिः सायनसूर्योयद्दिनेमेषादौतद्दिनेसूर्यस्यनाडिकामंडलेस्थितिः नाडिकामंडलंलंकापूर्वपदं अतस्तद्दिनेमध्याह्नेलंकायांशंकुच्छायानास्ति खमध्यस्थितत्वात् अन्यदेशेतुपूर्वापरंसममंडलमतस्तद्दिनेऽपिमध्याह्नेऽन्यदेशेशंकुच्छायाभवति सैव पलभा तस्याःपलभाविषुवतीतिचपर्यायौ एवमत्रैकांगुलांपलभांप्रकल्प्य अक्षप्रभासंगुणितापमज्येत्याद्युक्तप्रकारेण

स्यात्सायनोष्णांशुभुजर्क्षसंख्याचरार्धयोगोलवभोग्यघातात् ॥
खाग्न्याप्तियुक्तस्तुचरंधनर्णंतुलाजषट्केतपनेऽन्यथास्ते ॥ २२ ॥

राशित्रयस्यचराणिप्रसाध्य तान्यधोऽधःशुद्धानिजातानिचरखंडानि१० । ८ । ३ ततोऽनुपातः यद्येकांगुलयाक्षप्रभयाएतावन्मितानिचरखंडकानि तदेष्टाक्षप्रभयाकानीति एवमक्षप्रभात्रिस्था एभिःपृथग्गुणिताहरेणहृता सतीष्टचरखंडानिभवंतीति अत्रैतत्त्रैराशिकंसुखार्थमंगीकृतं अप्रासावपिप्रासिःकृता वृत्तक्षेत्रेपरिध्याश्रितत्वात् अतो विरोधःप्रतिभाति सवक्तमशक्यते यन्महद्भिराचार्यैरंगीकृतंतद्दोषयुक्तमप्यदुष्टं यावदृष्टांगुलाक्षप्रभातावदंतरंनास्ति तत्परतःसांतराणिभवंतिइतिबुद्धिमद्भिर्विलोक्यम् ॥ २१ ॥ स्यादिति सायनोऽयनांशयुक्तोयउष्णांशुः सूर्यस्तस्यभुजस्तस्यऋक्षाणिराशयस्तत्संख्यानियानिचरार्धानिचरखंडानितेषांयोगोलवैर्भागैर्भोग्यस्यखंडस्ययोघातो

गुणनंतस्मात्याखाभ्यात्रिंशद्भागातिस्तयायुक्तःसखंडयोगश्चरंपला मकंस्यात् तच्चरंतपनेसूर्येतुलाजषट्केधनर्णं स्यात् तुलादिषट्केधनं मेषादिषट्केऋणं इदमुदयेसूर्योदयकालीनग्रहसाधने अयंविधिरितिअस्तेसायंकालीनग्रहसाधने अन्यथाउक्तवैपरीत्यं तुलादौऋणं मेषादौधनं अत्रोपपत्तिः चरंनामलंकार्कोदययोरंतरं अतस्तद्दक्षिणो चरंतत्साधनायोपायः अत्रप्रतिराशिखंडानिसंत्यतोभुजराशिमितयोगःकर्तव्यः शेषात्त्रैराशिकंयदित्रिंशद्भिः३० भागैरप्यखंडतुल्यंचरंलभ्यते तदाशेषभागैःकिमिति सुगमं अथधनर्णोपपत्तिः जाताग्रहालंकार्कोदयकालीनारेखा

देयंतच्चरमरुणेविलिप्तिकासुमध्येंदौद्विगुणनवोद्धृतंकलासु ॥
भाप्तंचद्युमणिफलंलवेथवेदाभ्यभ्यूनःखरसहृतःशकोयनांशाः ॥ २३ ॥

र्कोदयकालीनाःकार्यास्तत्रलंकायांयत्क्षितिजंतस्योन्मंडलसंज्ञा अन्यदेशीयस्यक्षितिजस्यक्षितिजसंज्ञैव उत्तरगोले उन्मंडलार्कोदयात्पूर्वंक्षितिजार्कोदयस्यभूतत्वात् उन्मंडलास्तात् पश्चात्क्षितिजास्तमयोयतःक्षितिजादुपर्युन्मंडलं अतउत्तरगोलेउदयेचरमृणं अस्तेचधनं दक्षिणगोलेऽस्माद्विपरीतं तद्यथा उन्मंडलार्कोदयानंतरंक्षितिजार्कोदयस्यभूतत्वात् उन्मंडलास्तमयात्पूर्वंक्षितिजास्तमयोयतःक्षितिजादधउन्मंडलं अतोदक्षिणगोलेउदयेचरंधनमस्तेऋणमित्युपपन्नम् ॥ २२ ॥ अथास्यचरस्यसंस्कारंसूर्येंदौचंद्रेद्युमणिफलसंस्कारमयनांशसाधनंचैकवृत्तेनाह देयमिति तदानीतंचरंपलात्मकंअरुणेसूर्येविलिप्तिकासुविकलासुदेयं तदेवचरंद्विगुणंसत्नवोद्धृतंनव९भक्तंमध्येंदौ

मध्यमचंद्रेकलासुदेयं भातंसप्तविंशति२७भक्तं यद्द्युमणिफलं सूर्यस्यमंदफलं तदपियथागतंधनर्णंभागेषुदेयं ततः स्वमंदफलंज्ञेयं सस्फुटश्चंद्रःस्यात् अथसूर्येंदुस्फुटीकरणानंतरंअयनांशान्साधयति शकोवर्तमानःशालिवाहनशकः वेदाब्ध्यब्ध्यूनश्चतुश्चत्वारिंशदधिकचतुःशत४४४हीनस्ततः खरसहृतःषष्टि६०भक्तोयनांशाःस्युः अत्रोपपत्तिः यदानीतंचरंफलात्मकं यद्ग्रहाणांस्वस्वगतिवशाद्देयं तद्यथा यद्होरात्रपलै३६०० रेभिर्गतिकलालभ्यंते तदेष्टचरफलैः किमिति एवंसर्वेषांग्रहाणांदेयं तत्राचार्येणायंसंस्कारोरवींद्वोरेवकृतः अन्येषांस्वल्पगतित्वात्स्वल्पांतरत्वात्त्यक्तः तत्ररविगतिःषष्टि६०तुल्या तयापवर्तितेचरफलाल्लिषष्ट्याभाज्यानोतिजातं एवंताःकलाविकलार्थंषष्टिगुणाः षष्टितुल्ययोर्गुणहरयोर्नाशेकृतेचरफलतुल्याएवविकलारवौदेयाइत्युपपन्नं एवंचरपलानांचंद्रमध्यगति७९० गुंणःहरःसएव ३६०० अत्रगुणहरौगुणार्द्धेनापवर्त्य जातोगुणः२हरः किंचिदधिकानवतेसुखार्थंनवैवगृहीताः अतोद्विगुणंनव ९ भक्तंचरंचंद्रेकलासुदेयमितियुक्तमुक्तं अथदोःफलोपपत्तिः देशांतरफलेन स्वदेशमध्यमार्कोदयकालीनाग्रहाःकृताः सूर्यस्यमंदफलेनस्फुटार्कोदयकालीनाःक्रियंते अस्माकंस्फुटार्कोदयेनभवितव्यं मध्यमार्कस्यादृश्यत्वात् अतस्त्रैराशिकं यदिचक्रकलाभि२१६००र्नित्यंप्रवाहानिलेनपश्चान्नीयमानाभिर्ग्रहाअहोरात्रवृत्तेनस्वीयगतितुल्याःकलाःस्वव्यापारेणप्रापयंति तदारविमंदफलकलाभिरपरेणनीयमानाभिःकिमिति फलंग्रहेषुऋणधनमतःक्रियते ऋणफलेस्फुटार्कस्योनत्वात् भुजफलेनोनाःसंतःस्फुटार्कोदयकालीनाभवंति धनफलेस्फुटार्काधिकत्वात् मध्यमार्कात्फलेनाधिकाःसंतःस्फुटार्कोदयकालिकाभवंति एवमत्राचार्येणायंसंस्कारश्चंद्रस्यैवकृतः

गतिबाहुल्यात् अन्येषांस्वल्पगतित्वान्नोक्तः एवंरविफलंलवाद्यंषष्टिगुणंकलाद्यंस्यात्तच्चंद्रमध्यमगत्यागुण्यं एवंगुण

घातोगुणः ४७।४३।५ चक्रकला २१६०० हारोलवादिफलार्थंषष्टि६०श्च एवंहरघातोहरः१२९६०००गुणाहारौगु

णेनापवर्त्यजातोहरः २७ अतउक्तं भात्संचद्युमणिफलंलवइति अथायनांशोपपत्तिः इष्टदिनेदिनार्धेयंत्रादिवेधेनसाव

यवानुन्नतांशान्प्रसाध्य तान्नवतेर्विशोध्य शेषांशस्वांशयोरेकान्यदिशोरंतरंयोगंविधायतेभ्यःक्रांतिभागेभ्यःक्रांतिखं

डकश्चायंकुर्यात् ससायनसूर्यस्यभुजःस्यात् तत्कालिकगणितागतस्फुटार्कस्यापिभुजःकार्यस्तद्भुजप्राग्भुजयोरंतरंतेऽ

यनांशाः यद्गिणितागतान्मध्याद्भुजोऽधिकस्तदातेधनाख्याः ऊनास्तदाऋणाख्याएव अत्रोपलब्धिरेववासना एषांप्र

भुक्ताव्यर्कविधोर्लवायमकुभिर्यातातिथिःस्यात्फलंशेषंयातमिदंहरात्प्रपतितंभोग्यंविलि

प्तास्तयोः ॥ भुक्त्योरंतरभाजिताश्चघटिकायातैष्यकाःस्युःक्रमात्पूर्वार्द्धेकरणंबवाद्गततिथि

द्विघ्यद्वितष्टाभवेत् ॥ २४ ॥

तिवर्षमेकैकाकलाउत्पद्यते चतुश्चत्वारिंशदधिकचतुःशत४४४मितेशकेऽयनांशाभावोऽभूत् प्रतिवर्षंकलावृद्धिः अतोवे

दाब्ध्यब्ध्यूनेशकेयावंतिवर्षाणितावंत्यएवायनांशकलास्ताःषष्टिभक्ताभागाःस्युः अतःखरसहृदिति चत्वारिंशदधिकच

तुर्दशशतवर्षैः १४४० परमायनचलनस्यव्यावृत्तिर्भवति तत्रयस्मिन्पक्षेकलोपचयस्तस्मिन्पक्षेचतुर्विंशत्यंशाःपरमा

यनचलनांशाः यस्मिन्पक्षेचतुःपंचाश५४द्विकलाउपचीयंते तत्पक्षेसप्तविंशत्यं२७शाःपरमाउत्पद्यंत अष्टादशशत

१८०० वर्षमध्येएवमेषांचयोपचयवशात्प्रागपरवशाच्चधनर्णसंभवःस्यात् ॥ २३ ॥ एवंस्पष्टार्कोदयकाली

नौस्पष्टौसूर्यचंद्रौकृत्वेदानींतिथिनक्षत्रयोगकरणसाधनंवृत्तद्वयेनकरोति भक्ताइति तदिति विगतोऽर्कःसूर्योयस्मादे
वंभूतोयोविधुश्चंद्रस्तस्यलवाराशीन् त्रिंशतासंगुण्य भागेषुसंयोज्य सर्वेभागाःकार्याः तेयमकभिर्द्वादशभिर्भक्ताः
संतोयत्फलंतत्तुल्यायातातिथिःस्यात् यच्छेषंतदपियातं तत्हरात्द्वादशमितात्पतितंशोधितंसत्भोग्यंस्यात् तयो
र्गतगम्ययोर्विलिप्ताविकलाः भुक्त्योःसूर्यचंद्रगत्योर्यदंतरंतेनभाजिताः लब्धंयातैष्यकाघटिकाःक्रमाद्भवंति यातक
लासुहृतासुयातघटिकाः पूर्वदिनेतस्याएवतिथेर्भुक्तघटिकाःस्युः एवमेष्यकलासुएष्याः तस्मिन्दिनेसूर्योदयमारभ्य

तत्सैकंत्वपरेदलेऽथशकुनेःस्युःकृष्णभूतोत्तरार्धात्चाथविधोश्चसार्कसितगोर्लिप्ताःखखाष्टो
धृताः ॥ यातैष्यतिथियुतीक्रमाद्गगनषण्निघ्नगतैष्यतयोरिंदोर्भुक्तिहृतेजवैक्यविहृतेयातै
ष्यनाडयःक्रमात् ॥ २५ ॥

तिथेर्घटिकाःस्युरित्यर्थः अथकरणंसाधयति गततिथिर्द्विघ्नीद्विगुणाअद्रिभिःसप्तभि७स्तष्टाभक्तासतीतिथेःपूर्वार्द्धेक
रणंवर्तमानंस्यात् तदेवसैकं एकयुक्तंसत्अपरेदलेतिथेरुत्तरार्धेस्यात् अथस्थिरकरणचतुष्टयस्यनिवेशमाह कृष्णभूतो
त्तरार्धात् कृष्णःकृष्णपक्षः तस्ययोभूतश्चतुर्दशीतस्याःउत्तरार्धात् शकुनेःप्रभृतिचत्वारिकरणानिस्युः एतदुक्तंभवति
कृष्णपक्षेचतुर्दश्युत्तरार्धेशकुनिः अमापूर्वार्धेचतुष्पादं अपरार्धेनागं आद्येप्रतिपद्दलेकिंस्तुघ्नंनामकरणं एतानिस्थि
राणिचत्वारि अथकरणकथनानंतरंविधोश्चंद्रस्य तथासार्कसितगोःसूर्यचंद्रयोगस्य लिप्ताःकलाःखखाष्टोद्धृताः अ

ष्टशत८०० भक्ताःफलंक्रमात् यातेभयुतीनक्षत्रयोगौभवतः चंद्राज्जातंनक्षत्रंयोगाद्योगइति तयोर्नक्षत्रयोगयोर्ग
तैष्येयत्शेषंतदेवगतंहरादष्टशतमितात्शोधितं एष्यंतेषष्टिगुणेनक्षत्रार्थंइंदोश्चंद्रस्य भुक्त्यागत्याहृतेभक्ते योगार्थं
सूर्यचंद्रयोःजवैक्येनगतियोगेनभक्तेक्रमात्तयोर्यातैष्यानाड्यःस्युरित्यर्थः अत्रोपपत्तिः दर्शांतेसूर्यचंद्रौसमौभवतः
दर्शःसूर्येंदुसंगमइतिस्मरणात् ततोदर्शांताच्चंद्रोबहुगतित्वादग्रेयाति पुनरमांतेसमौतयोरंतरेचांद्रमासः दर्शावधि
श्चांद्रमासोहिमासस्मरणात् तयोरंतरंत्रिंशत्तिथयः त्रिंशत्तिथिभिर्यदिभांशतुल्यं३६०सूर्यचंद्रांतरंलभ्यते तदैकति
थ्याकिमिति ज्ञाताद्वादशभागाः१२एकतिथौसूर्यचंद्रांतरंयदिद्वादशभागतुल्येनरविचंद्रांतरेणैकातिथिः तदेष्टसूर्यचं
द्रांतरभागैःकियत्यइति अत्रसूर्यगत्यधिकाचंद्रगतिरतोव्यर्कविधोर्लवायमकुभिर्भक्ताइति ततोयच्छेषंतत्यातं ग्रहभुक्त
त्वात् ततोहितद्द्वादशशुद्धंभोग्यंस्यात् एवंततोघटिकाज्ञानार्थमनुपातः यदिगत्यंतरकलाभिःषष्टिघटिकास्तदागतैष्य
कलाभिःकिमिति कलाःषष्टिगुणाविकलाःस्युः अतोयातैष्यविकलाःगत्यंतरकलाभक्ताःतिथियातैष्यघटिकाःस्युरित्युप
पन्नं अथकरणोपपत्तिः एकतिथौकरणद्वयमित्यागमः ततोनुपातः यद्येकतिथ्याकरणद्वयंतदेष्टतिथ्याकिमिति अत
स्तिथिर्द्विगुणाकदाचित्सप्ताधिकास्यात् करणानिसप्तैव अतःसप्ततष्टशेषमितंशुक्लप्रतिपदादितोगततिथिग्रहणात्
किंस्तुघ्नादिकंकरणंवर्तमानतिथिपूर्वार्द्धंगतंस्यात् तद्भवादितोगणनार्थंनिरेकंकार्यं वर्तमानत्वार्थंचसैकमिति तुल्ययोर्ध
नर्णक्षेपयोरेकयोर्नाशेशेषमितमेववर्तमानतिथिपूर्वार्द्धवर्तमानकरणमितियुक्तं तदेवसैकमुत्तरार्द्धस्यादितिप्रत्यक्षसिद्धं श
कुन्यादिकरणचतुष्टयसंस्थानमागमप्रमाणकं अथनक्षत्रयोगसाधनोपपत्तिः समस्वोभपंजरोद्वादशराशिभिर्व्याप्तस्त

थासप्तविंशतिनक्षत्रैश्च अतोभगणकलानामेकनक्षत्रकरणायानुपातः यदिसप्तविंशतिनक्षत्रेश्चक्रकला २१६०० भवंति तदैकनक्षत्रेणकिमिति अतोजातोऽष्टशतकलाः ८०० अष्टशतकलाभिरेकंनक्षत्रं तदेष्टग्रहकलाभिःकियंती ति लब्धंगतनक्षत्राणिशेषंभुक्तंहरशुद्धंभोग्यंस्यादेव ततोऽन्योऽनुपातः यदिचंद्रगतिकलाभिःषष्टिघटिकास्तदागंत ष्यकलाभिःकाइति कलाःषष्टिगुणाःविकलाः ताश्चंद्रगतिभक्ताःनक्षत्रगतैष्यघटिकाःस्युरित्युपपन्नं अथयोगवास ना रविचंद्रयोर्मिलितयोर्यल्लक्षत्रंसयोगइत्युच्यते अतोत्रयुक्तिर्नक्षत्रवत्गतगम्यघटिकार्थमनुपातोगतियोगेनकर्तुं युज्यते योगानयनत्वादितिमत्यक्षोपपत्तिः ॥२४॥२५॥ दैवज्ञवर्यस्यदिवाकरस्यसुतेनमल्लारिसमाह्वयेन ॥ वृत्तौकृता

खमष्टमरुतोद्रिभूभुवउदध्यगोर्व्योऽष्टदग्दृशोनवनगाश्विनोऽक्षदशनाःशरांगाग्नयः ॥
गुणांकदहनाःखखाब्धयइभांगरामाःक्रमान्नवांबुधिदृशोनभःक्षितिभुवश्चलांकाइमे ॥१॥

यांग्रहलाघवस्यजातोरवींद्वोःस्फुटताधिकारः ॥ इतिश्रीसकलागमाचार्यवर्यगणेशदैवज्ञकृतग्रहलाघवस्यटीकायांदैव ज्ञवर्यदिवाकरात्मजमल्लारिदैवज्ञविरचितायांरविचंद्रस्पष्टीकरणाधिकारोद्वितीयः ॥ २ ॥ ॥ ॥ ॥

अथपंचतारास्पष्टीकरणाधिकारोव्याख्यायते ॥ तत्रादौभौमादीनांसिद्धानिशीघ्रफलानिपंचवृत्तेनवदति खमितिप क्षितिभुवोभौमस्यचलांकाःशीघ्रफलस्यतेंकाःस्युः खंशून्यं अष्टमरुतः अष्टपंचाशत् ५८ अद्रिभूभुवःसप्तदशाधिकं शतं ११७ उदध्यगोर्व्यःचतुःसप्तत्यधिकंशतं१७४ अष्टदग्दृशःअष्टाविंशत्यधिकंशतद्वयं २२८ नवनगाश्विनः

एकोनाशीत्यधिकंशतद्वयं २७९ अक्षदशनाःपंचविंशत्यधिकत्रिशती ३२५ शरांगाग्नयःपंचषष्ट्यधिकत्रिशती ३६५ गुणांकदहनाःत्रिनवत्यधिकत्रिशती ३९३ खखाब्धयःचतुःशती ४०० इभांगरामाःअष्टषष्ट्यधिकत्रिशती ३६८ नवांबुधिदशःएकोनपंचाशदधिकद्विशती २४९ नभःशून्यं ० एतेभौमस्य ॥ १ ॥ विदोबुधस्यएतेशीघ्रांकाः खंशून्यं ० भूकृताए

खंभूकृताःकुवसवोद्रिभवाःखतिथ्योऽष्टाद्रीन्दवोनवनवक्षितयोर्कपक्षाः ॥ अर्काश्विनः शरखगक्षितयोऽक्षतिथ्योगोष्टौखमाशुफलजाःस्युरिमेविदोंऽकाः ॥ २ ॥ खंतत्त्वाग्निनगाब्धयोऽष्टषट्काःपंचेभागजखेचरारसाशाः ॥ नागाशाद्विदिशोनवाहयःषट्षष्टिःषट्कगुणानभोगुरोःस्युः ॥ ३ ॥ खमङ्ग्यंगैस्तुल्यारसयमभुवःषट्कधृतयोऽरिसिद्धाःपक्षाभ्राग्नयउदधिनाराचदहनाः ॥ द्विशून्योदन्वंतःखजलधिकृताभूरसकृतास्त्रिवेदोदन्वंतोरसयमगुणाःखंभृगुजनेः ॥ ४ ॥ खमिषुक्षितयोगजाश्विनोगोदहनानागकृताःपयोधिबाणाः ॥ द्विरंगेषुमिताहुताशबाणाःशरवेदास्त्रिगुणाधृतिःखमार्केः ॥ ५ ॥

कचत्वारिंशत् ४१ कुवसवएकाशीतिः ८१ अद्रिभवाःसप्तदशाधिकशतं ११७ खतिथ्यःसार्धशतं १५० अष्टाद्रींदवःअष्टसप्तत्यधिकशतं १७८ नवनवक्षितयःएकोनद्विशती १९९ अर्कपक्षाःद्वादशयुक्तद्विशती २१२ अर्का

श्विनस्तएव २१२ शरखगक्षितयःपंचोनद्विशती१९५ अक्षतिथ्यःपंचपंचाशदधिकंशतं १५५ गोष्टौएकोननव
तिः ८९ खंशून्यं०एतेबुधस्य॥गुरोर्बृहस्पतेःएतेशीघ्रांकाः खंशून्यं०तत्त्वानिपंचविंशतिः २५ नगाब्धयःसप्तचत्वारिं
शत् ४७ अष्टषट्काःअष्टषष्टिः६८ पंचेभाःपंचाशीतिः ८५ गजखेचराःअष्टनवतिः ९८ रसाशाःषडधिकंशतं१०६
नगाशाःअष्टोत्तरशतं १०८ द्विदिशः १०२ द्व्युत्तरशतं नवाहयःएकोननवतिः ८९ षट्कषष्टिः ६६ षड्गुणाःषट्त्रिं
शत्३६ नभः०शून्यं एतेगुरोः ॥ भृगुजनेःशुक्रस्यैतेशीघ्रांकाः खंशून्यं अग्र्यंगैस्तुल्याःअंकाः त्रिषष्टिः६३रसय
मभुवःषड्विंशत्यधिकशतं १२६ षट्कधृतयःषडशीत्यधिकशतं १८६ अरिसिद्धाःषट्चत्वारिंशत्यधिकद्विशती २४६
पक्षाभ्राग्नयः द्व्यधिकत्रिशती ३०२ उदधिनाराचदहनाः उदधयश्चत्वारः नाराचाःबाणाःपंच दहनाःअग्नयस्त्रयः
एवंचतुःपंचाशदधिकत्रिशती ३५४ द्विशून्योदन्वंतः द्व्यधिकचतुःशती ४०२ खजलाधिकृताःचत्वारिंशदधिकचतुः
शती ४४० भूरसकृताःएकषष्टयधिकचतुःशती४६१ त्रिवेदोदन्वंतःत्रिचत्वारिंशदधिकचतुःशती४४३ रसयमगुणाः
षड्विंशत्यधिकत्रिशती ३२६ खंशून्यं० एतेशुक्रस्य ॥ आर्केःशनेःएतेशीघ्रांकाः खंशून्यं०इषुक्षितयःपंचदश१५
गजाश्विनोऽष्टाविंशतिः२८ गोदहनाः एकोनचत्वारिंशत् ३९ नागकृताअष्टचत्वारिंशत् ४८ पयोधिबाणाश्चतुः
पंचाशत् ५४ द्विर्द्विवारमगेषुमिताःसप्तपंचाशत् ५७।५७ हुताशबाणास्त्रिपंचाशत्५३शरवेदाःपंचचत्वारिंशत्४५त्रि
गुणास्त्रयस्त्रिंशत्३३ धृतिरष्टादश१८खंशून्यं० एतेशनेःशीघ्रांकाः अत्रोपपत्तिः अत्रग्रहस्पष्टीकरणार्थंग्रहाणामसकृ
न्मंदफलानिशीघ्रफलानिप्रसाध्य तत्संस्कृतोग्रहःस्पष्टोभवति तद्यथा प्रथमंशीघ्रफलंप्रसाध्यं शिघ्रकेंद्रस्यदोर्ज्यांको

टिज्येविधाय ततःकोटिज्यान्त्यफलज्ययोःकर्कमृगादिकेंद्रेअंतरयोगौक्रमेण साकोटिः दोर्ज्याभुजः ततस्तत्कृत्योर्योग
पदमितिशीघ्रकर्णःप्रसाध्यः ततोऽनुपातद्वयात्फलं यदित्रिज्यातुल्ययाशीघ्रकेंद्रदोर्ज्यापरमशीघ्रफलज्यातुल्यंफलंलभ्य
तेतदेष्टयाकिमिति ततोऽन्योऽनुपातः यदिशीघ्रकर्णाग्रेइदंफलं तदात्रिज्याग्रेकिमिति त्रिज्यातुल्ययोर्गुणहरयोर्नाशे
शीघ्रकेंद्रदोर्ज्याअंत्यफलज्यागुणाशीघ्रकर्णभक्ताइष्टफलज्याभवतीति तद्धनुःशीघ्रफलं अत्रेदंजडकर्मदृष्ट्वा आचार्ये
णशीघ्रकेंद्रंपंचदशभागवृद्ध्याप्रकल्प्य शीघ्रफलानिप्रसाध्य तानिसावयवान्यतोदशगुणानिराशिषट्कमध्येद्वादशसर्वे
षांग्रहाणांपृथक्पृथगुत्पादितानि तत्रमंदाववोधार्थंधूलीकर्मप्रतीत्योच्यते तत्रप्रथमंभौमशीघ्रफलानयनार्थंशून्यंशीघ्र
केंद्रंप्रकल्प्य जातंशीघ्रफलमपिशून्यं भुजाभावात् एवंद्वितीयशीघ्रांकोत्पत्तौशीघ्रकेंद्रंपंचदशभागाः १५ अस्यदोर्ज्या
३१ कोटिज्या ११५।६० भौमस्यपरमशीघ्रफलज्या ७७ अन्यैर्भास्कराद्यैःभूकुंजरा ८१ उक्ताः अस्मिन्काले
आचार्येणएतावतीज्ञाता अतइयंकोटिज्या ११५।३० परेणानेन ७७ द्वाभ्यांचगुणिता १७७८७ अनयाखाभ्रा
ब्धिशक्रैः १४४०० युतापरकृतिर्युक्ताकृता ३८११६ अत्रपरकृतिर्युक्ताकृताक्वचिदूनापिकर्तव्या एवमस्याःमूलं
जातःशीघ्रकर्णः १९५।१४ परेण ७७ दोर्ज्या ३१ गुणिता जाता २३८७ इयंकर्णेनभक्ताजाता १२।१३ अ
स्याःधनुःशीघ्रफलंभागाद्यं ४।४८ एतत्सावयवमतोदशगुणंजातमेकस्थाने ५८ अतोभौमस्यांकोद्वितीयोऽष्टमरुतइ
त्युक्तः एवमग्रेपि पंचदशभागवृद्ध्याशीघ्रकेंद्रंप्रकल्प्य सर्वेषांशीघ्रांकाः अत्रदोर्ज्याकोटिज्येराशित्रयमध्येऽतोराशि
त्रयमध्येषडेवशीघ्रांकावक्तव्याः कथमत्रषड्राशिमध्येद्वादशोक्ताःउच्यंते इदंशीघ्रफलंकर्णाश्रितंकर्णस्यपरमाधिक्यं

त्रिभेनभवति किंचिदधिकेनैवत्रिभेणभवति कर्णात्यल्पतातुद्वितीयत्रिभेऊनएवभवति एवंषड्राशिमध्येकर्णह्रासवृद्धी अतःशीघ्रफलानयनेपदंत्रिभादूनाधिकंभवति तद्यथा प्रथमंपदंत्रिभंशीघ्रफलांशैरधिकं द्वितीयंशीघ्रफलांशोनं तृतीयं शीघ्रफलांशोनं चतुर्थंशीघ्रफलाधिकमिति अतएवोक्तंसिद्धांतशिरोमणौ ‘चापेनशीघ्रांत्यफलज्यकायाःत्रिभंयुतोनेन युतंपदानि॥दोस्तेषुयातैष्यमयुग्मयुग्म ’ इति अतःषड्राशिमध्ये उक्तानिषड्राशिभागाः अशीत्यधिकशतं अतएतेपंच दशभक्ताः द्वादशैवांकाभवंति एवंशीघ्रफलांकानुक्त्वेदानींतत्कर्तव्यतामेकवृत्तेनाह॥१।२।३।४।५॥ भौमेति । भौमोमं गलःआर्किःशनिःइज्योगुरुःएभिर्विहीनोमध्यमरविःस्वस्यआशुकेंद्रंशीघ्रकेंद्रंभवति विद्भृग्वोःशीघ्रकेंद्रंअहर्गणादुक्तम

भौमार्किज्यविहीनमध्यमरविःस्यात्स्वाशुकेंद्रंतुविद्भृग्वोरुक्तमिदंरसोर्ध्व—
मिनभाच्छुद्धंतदंशादिनैः ॥ भक्ताःखादिफलक्रमादिहगतांकोऽसौक्षयद्ध्यांह
ताच्छेषाद्बाणकुलब्धिहीनयुगयंदिग्घ्नहृद्वाद्यंफलम् ॥ ६ ॥

स्तिएतत्केंद्रंचेद्रसोर्ध्वंषड्राश्यधिकंतर्हिइनभाद्द्वादशराशिभ्यःशुद्धंतस्यांशाःदिनैःपंचदशभि १५ भक्ताःसंतःखादिफल क्रमात् खंशून्यंआदिर्यस्येति एवंभूतोयःफलक्रमस्तस्मादसौगतांकः अग्र्यांकेनसहअंतरेक्रियमाणेयःक्षयोवावृद्धिः स्यात्तयाहताद्गुणिताच्छेषाद्बाणकुलब्धिःपंचदशांशस्तेनक्षयेहीनोवृद्धौयुक्तःकार्यः असौदिग्घ्नहृद्दशभक्तःभागाद्यंशीघ्र फलंभवति तन्मेषादिकेंद्रेधनं तुलादिकेंद्रेऋणंपूर्वमेवोक्तमस्ति अत्रोपपत्तिः यदिपंचदशभागैरेकःशीघ्रांकस्तदेष्टैः

किं एवंयल्लब्धंतन्मितोगतःस्यात् ततःशेषादनुपातः यदिपंचदशभागैःगतैष्यांतरतुल्याह्रासवृद्धिर्लभ्यते तदाशेषांशैः किमिति फलेनक्षयेहीनःवृद्धौयुक्तःगतांकःकार्यएव ततोदशगुणांकाःसंत्यतोदशभिर्भक्तोभागाद्यंशीघ्रफलंभवति इत्यु पपन्नम् ॥६॥ एवंशीघ्रांकानुक्त्वेदानींमांदांकान्मंदकेंद्रसाधनंचवृत्तद्वयेनाह खमिति खेंद्रक्षाणीति असृजोभौमस्यै तेमांदामंदफलांकाःस्युः खंशून्यं० गोश्विनःएकोनत्रिंशत्२९ अद्रिमरुतःसप्तपंचाशत्५७ अजगजाःपंचाशीतिः८५न

खंगोश्विनोद्रिमरुतोऽक्षगजानवाशाःसिद्धेंदवःखदहनक्षितयोऽसृजोंऽकाः ॥
मांदाबुधस्यखमिनाःकुदृशोऽष्टपक्षादेवाःशरानलमितारसवह्नयःस्युः ॥ ७ ॥
खेंद्रक्षाणिनवाग्नयोह्युदधयोऽक्षाक्षानगाक्षागुरोःशुक्रस्याभ्ररसेशविश्वमनवो
द्विबाणचंद्राःक्रमात् ॥ खंगोऽब्जःखकृताःखषड्नगनगागोष्टौत्रिनंदाःशनेः
शुद्धोंघ्यद्रिषडग्निनागगृहतःस्यान्मंदकेंद्रंकुजात् ॥ ८ ॥

वाशानवोत्तरशतं१०९ सिद्धेंदवश्चतुर्विंशत्यधिकशतं १२४ खदहनक्षितयःत्रिंशदधिकशतं १३० बुधस्यैते खं०इनाद्वाद श१२ कुदृशएकविंशतिः२१ अष्टपक्षाःअष्टाविंशतिः२८ देवास्त्रयस्त्रिंशत्३३ शरानलमितापंचत्रिंशन्मिताःरसवह्नयः षट्त्रिंशत् गुरोरेते खंशून्यं०इंद्राश्चतुर्दश१४ ऋक्षाणिसप्तविंशतिः२७ नवाग्नयएकोनचत्वारिंशत्३९ अहयःअष्टौ उद धयश्चत्वारः एवमष्टाचत्वारिंशत्४८ अक्षाक्षाःपंचपंचाशत्५५ नगाक्षाःसप्तपंचाशत् ५७ अथशुक्रस्य अभ्रंशून्यं० र

साःषट्६ ईशाःएकादश११ विश्वेत्रयोदश१३ मनवश्चतुर्दश१४ द्विःद्विवारंबाणचंद्राःपंचदश१५।१५ अथशनेः खंशू
न्यं० गोजाएकोनविंशतिः १९ खकृताश्चत्वारिंशत् ४० खषट्षष्टिः ६० नगनगाःसप्तसप्ततिः७७ गोष्टौएकोननवतिः
८९ त्रिनंदाःत्रिनवतिः९३ग्रहक्रमात् अब्ध्यद्रिषडग्निनागगृहतःशुद्धः कुजाद्भौममारभ्य मंदकेंद्रंस्यात् एतदुक्तंभवति
अब्धयश्चत्वारो४राशयःभौममंदोच्चं अद्रयःसप्त ७ राशयोबुधस्य षट् ६ गुरोः अग्नयस्त्रयः ३ शुक्रस्य नागाअष्टौ८रा
शयःशनेः एवंस्वमंदोच्चात् ग्रहःशोधितोमंदकेंद्रंभवेदिति अत्रोपपत्तिः मंदोच्चकेंद्रवासनामंदफलपरमत्वज्ञाने वासनाच
पूर्वमेवोक्ता अत्रमंदफलानयनेराशित्रयमेवपदंगृहीतं तत्कथंकर्णानंगीकारात् अहोअत्रशीघ्रफलार्थंकर्णोगृहीतः मंद
फलार्थंनगृहीतःसकथंकर्णोहिग्रहकक्षाव्यासार्धं एवंमंदकर्णोमंदप्रतिमंदप्रतिमंडलेव्यासार्धं शीघ्रकर्णःशीघ्रप्रतिमंड
लेव्यासार्धं एवं यत्साधितंमंदफलंतन्मध्यमात् मध्यमोमंदप्रतिमंडलेअतोजातंमंदफलंमंदकर्णाग्रस्थानीयं अतोमंदफला
नयनेमंदकर्णोऽपिग्राह्यः ससर्वैरपिनांगीकृतस्तत्रग्रहकर्णाग्रहणेएकंकारणंवक्तव्यं शीघ्रफलान्मंदफलस्योनत्वात् स्व
ल्पांतरत्वात्मंदकर्मणिकर्णोनगृहीतः एवंचेत्तर्हिस्वल्पेऽपिशीघ्रफलेकर्णोगृह्यते तदधिकेमंदफलेनगृह्यते एवंकथंअतो
त्रयुक्त्याहेतुज्ञानंनभवति फलवासनाविचित्रास्ति एतादृशेनैवकर्मणा आकाशेग्रहस्पष्टत्वंदृश्यते अतःप्रत्यक्षप्रमाणो
पलब्ध्याएतत्कृतमितिवक्तव्यंसर्वंनिरवद्यं उक्तंचसिद्धांतशिरोमणौ ‘ स्वल्पांतरत्वान्मृदुकर्मणोहकर्णःकृतोवेतिचके
चिदूचुः ॥ नाशंकनीयंनचलेकिमित्थंयतोविचित्राफलवासनात्रे ’ ति अत्रत्रिज्यातुल्ययामंदकेंद्रदोर्ज्यययायदिपरमंमंद

फलं तदेष्टदोर्ज्यया किमिति एवं पंचदशभागवृद्ध्या मंदकेंद्रं प्रकल्प्य अनया युक्त्या मंदफलानि प्रसाध्यानि तानि सावयवा न्यतो दशगुणानि कृत्वा राशित्रयमध्ये ग्रहाणां पृथक्पृथक् षडंकाः मांदाः भवंतीत्युपपन्नं अत्र धूलीकर्म प्रथमांको भुजाभा वाच्छून्यं ततः पंचदश १५ भागास्तेषां ज्या ३१ भौममंदपरमफलेन गुणिता जाता ३४७।१२ इयं त्रार्क १२० भक्ता जातं फलं २५४ इदं सावयवत्वाद्दशगुणं २९ जातो भौमस्य द्वितीयो मांदांकः एवं सर्वेषां सर्वैका उत्पादनीयाः ॥ ७ ॥ ८ ॥ एवं मांदांकानभिधायेदानीं मंदफलकर्तव्यताप्रकारमेकवृत्तेनाह मृद्विति मृदुकेंद्रस्य ये भुजभागास्ते दिनैः पंचदशभिः १५

मृदुकेंद्रभुजांशकादिनाप्ताः फलमंकः प्रगतस्तदूनितैष्यः ॥
परिशेषहतो दिनाप्तियुक्तो दशभक्तः फलमंशकादि मांदम् ॥ ९ ॥

आप्ता भक्ताः संतो यत्फलं तन्मितः प्रगतः अंकः स्यात् तेन गतांकेन ऊनितो य एष्यांकः स परिशेषेण शेषभागैर्हतो गुणितस्त स्माद्धा दिनाप्तिः पंचदशभागः तेन युक्तः सगतांकस्ततो दशभक्तः अंशकादि भागादि मंदफलं भवतीत्यर्थः अत्रोपपत्तिर नुपातद्वयेन यदि पंचदशभागैरेको मांदांकस्तदेष्टैर्मंदकेंद्रांशैः किमिति अतो गतांशादिनाप्तागतांकः स्यादिति शे षादनुपातः यदि पंचदशभागैरेतावती गतैष्यांतरतुल्या वृद्धिर्लभ्यते तदा शेषांशैः किमिति अंकादि गुणिताः सं त्यतस्तद्दशभिर्भाज्यं फलं भवतीत्युपपन्नम् ॥ ९ ॥ एवं शीघ्रफलमंदफलसाधनमुक्त्वेदानीं ग्रहे कथं संस्कार्यमित्येकवृ त्तेनाह प्रागिति प्राक् आदौ अहर्गणोत्पन्नमध्यमे ग्रहे चलफलस्य शीघ्रफलस्य दलमर्धं यथागतं धनर्णं प्रदद्यात् तस्माद्द

तशीघ्राधात्मांदंमांदफलंसाध्यं तदखिलमपिमंदफलं मध्यमेअहर्गणोत्पन्नेयथागतंविदधीतकुर्वीत तन्मंदफलंद्राकेंद्रे शीघ्रकेंद्रेपूर्वंक्तेविलोमंविपरीतंधनर्णदेयं अतोमंदफलसंस्कृतशीघ्रकेंद्रात्शीघ्रफलंसाध्यं तत्सर्वंतस्मिन्दत्तमन्दफले विदधीतकुर्वीत असौग्रहःस्फुटोभवतीत्यर्थः अत्रोपपत्तिः प्रत्यक्षोपलब्धिरेव ॥१०॥ एवंग्रहस्पष्टत्वमभिधायेदानींग तिमंदस्पष्टतामेकवृत्तेनाह मांदाकांतरमिति आर्किःशनिःअसृक्भौमःगुरुर्बृहस्पतिः एषांमंदफलानयनेयत्कृतंमांदाकां

प्राङ्मध्यमेचलफलस्यदलंविदध्यात्तस्माच्चमांदमखिलंविदधीतमध्ये ॥
द्राकेंद्रकेऽपिचविलोममतश्चशीघ्रंसर्वंचतत्रविदधीतभवेत्स्फुटोसौ ॥ १० ॥
मांदाकांतरमार्क्यसृग्गुरूणांभक्तंबाणनगैःशरैःस्वरामैः ॥
विड्भृग्वोर्द्विहताशुगोद्धृतंतद्द्यात्प्राग्वदितौमृदुस्फुटासा ॥ ११ ॥

तरंतत्क्रमेणबाणनगैःपंचसप्तत्या ७५ शरैःपंचभिः५ स्वरामैस्त्रिंशद्भि३०र्भक्तंलब्धंकलाद्यंतद्गतिमंदफलंस्यात् विड्भृग्वो र्बुधशुक्रयोःमांदाकांतरंद्वि २ हतंसत्आशुगैःपंचभिःउद्धृतंफलंस्यात् तत्प्राग्वत्इतौमध्यगतौदद्यात् सामृदुस्फुटागति र्भवतीत्यर्थः अत्रोपपत्तिःप्रतिपादितप्रमेया तथापिकिंचिदुच्यते अत्रग्रहफलाभावेगतिफलंपरमं ग्रहफलपरमत्वेगति फलाभावः ग्रहफलाभावस्तुभुजादौ तत्रमांदाकांतरमपिपरमं तत्रगतिफलानिमांदानिपरमाणिकलादीनिलक्षितानि भौम ५।४८ बुध ४।४८ गुरु २८ शुक्र २।२४ शनि १५ एभ्योनुपातः यदिमांदाकांतरेणप्रथमांकतुल्येनएतानित

दृष्टेनकानीति एवमिष्टमांदाकांतरंएभिःपरमफलैर्गुण्यं परममांदाकांतरैराद्यांकतुल्यैर्भाज्यं एवंसर्वत्रगुणहरौगुणेनाप
वर्तिताजाताभौमादीनांहराःभौ५बु २।३० गु ३० शु२।३० श ७५ एवंभौमगुरुशनीनांहराःनिरवयवाः अतोमांदा
कांतरमेभिर्भाज्यमिति बुधशुक्रयोर्हरौसावयवावतस्तौद्वि २ सवर्णितौजातौसमावेव ५ अतस्तयोर्द्विहताशुगोद्धृत
मितिएवमेतत्मंदफलंमध्यमगतौदेयं सामंदस्पष्टागतिर्भवतीत्युपपन्नं अत्रगतिफलधनर्णत्ववासनापूर्वोक्तैवज्ञातव्या
॥ ११ ॥ अथगतेःस्पष्टत्वमेकवृत्तेनवदति भौमादिति भौमान्मंगलमारभ्य यच्चलांकानांशीघ्रांकानांविवरंद्वि

भौमाच्चलांकविवरंशरहत्स्वबाणांशाढ्यंत्रिहृत्कृतहृतंद्विगुणाक्षभक्तम् ॥
तद्धीनयुक्क्षयचयेतुमृदुस्फुटास्यात्स्पष्टाथचेद्बहुऋणात्पतितातुवक्रा ॥ १२ ॥

तीयशीघ्रफलानयनार्थंकृतमस्ति तत्क्रमात् शरैःपंचभिःहृत्भक्तं भौमस्यस्वबाणांशेनस्वपंचांशेनयुक्तंबुधस्यत्रिहृत्त्रि
३ भक्तंगुरोःकृतहृच्चतु४ र्भक्तंशुक्रस्यद्वि२ हतंद्विगुणंसत्अक्षभक्तंपंच५ भक्तंशनेःतद्गतेःशीघ्रफलंस्यात् सामृदुस्फुटाग
तिस्तेनफलेनक्षयचयेहीनयुक्क्षयेहीनाचयेयुक्तासतीस्पष्टाभवेत् अथचेदृणफलंबहुगतेर्नशुध्यति तदासागतिरेवफलात्
शोध्या शेषंवक्रगतिःस्यादित्यर्थः अत्रोपपत्तिर्गतिर्मंदफलवत् अत्रशीघ्रफलानंतरंगतेःशीघ्रफलं तत्रानुपातः यदिपंच
दशभागकलाप्रमाणेन९०० इदंशीघ्रांकांतरं तदाशीघ्रकेंद्रगतिकलाप्रमाणेनकिमिति ततःशीघ्रांकानांदश१० गुणि
तत्वात् तद्दशभिर्भाज्यंकलार्थंचषष्ट्यागुण्यं एवंशीघ्रांकांतरस्यहरघातोहरः९००० षष्टि६० र्गुणःगुणहरौगुणेनापव

त्यंजातोहरः १५० केंद्रगतिर्गुणोस्ति अत्रभौमगुरुशुक्रानांकेंद्रगतिभिरेभिः २८।५४।३७ सार्द्धशते १५० ह रेभक्तेजाताहराः ५।३।४ बुधकेंद्रगतिर्गुणाः १८६ अत्रगुणहरौत्रिंशतापवर्तितौ जातोगुणः६ हरः५ योराशिःषड्भि ६ र्गुण्यते पंच५भिर्भज्यतेसस्वत्वाणांशाद्यएवभवति तथाशनेःकेंद्रगतिः५७ अत्रगुणहरौगुणार्द्धेनापवर्त्य जातोगुणः२ हरः५ अतोद्विहताक्षभक्तंशीघ्रांकांतरंशनेर्गतिफलंस्यादित्युपपन्नं एवमेतत्मंदफलंमंदस्पष्टगतौदेयं स्पष्टास्यादेव तत्रधनर्णोपपत्तिः अंकांतरेअग्रेचेत्क्षयःतदाग्रहेस्वल्पफलत्वात्गतिरपिन्यूना अग्रेचेद्वृद्धिस्तदाग्रहेफलाधिकत्वात्स्पष्टगतिरधिका अतःक्षयवृद्ध्योर्ऋणधनसंयुक्ताचेत्फलंमंदस्पष्टगतेर्नशुध्यति तदाविपरीतशोधनेनविपरीतगति

शुक्रारयोश्चलभवोंत्यगतोयदांकःशेषांशकाश्चपतिताःपृथगक्षभूभ्यः ॥
येऽल्पाभृगोस्त्रिविहताअसृजोऽक्षभक्तादेयाःस्वशीघ्रफलवत्स्फुटयोःस्फुटौतौ ॥१३॥

र्वक्रागतिर्भवतीत्युपपन्नं वक्रत्ववासनामग्रेसविस्तरांवक्ष्यामः ॥ १२ ॥ अथभौमशुक्रयोरंत्यशीघ्रांकागमेग्रहेंतरं भवतीत्यतस्तत्रविशेषफलमेकवृत्तेनाह शुक्रेति शुक्रःप्रसिद्धः आरोभौमः एतयोरन्यतरस्यचलभवः शीघ्रफलोत्थः अंकः यदाअंत्यगतःस्यात्तदायेशेषांशाःपंचदशभक्तावशिष्टाः शीघ्रकेंद्रभागाः तेअन्यत्रपृथक्स्थाप्याः अक्षभूभ्यःपंचदशभ्यः१५ एकत्रपतिताःशोधिताः तयोःपृथक्स्थभागशोधितभागयोर्मध्येयेअल्पाःतेग्राह्यास्तेभृगोःशुक्रस्यत्रि३विहताःत्रिभक्ताःअसृजःअक्षैःपंचभिः५र्भक्ताःभागादिलब्धंग्राह्यं तत्स्वशीघ्रफलवत्धनर्णंस्पष्टग्रहेदेयं तौभौमशुक्रौस्फुटौस्पष्टौभवतः एवंशीघ्रफलांत्यांकागमेअंत्यांकतुल्यह्रासानुपातत्अंतरंजातं तद्भौमशुक्रयोरेवांकवहुत्वादुक्तं अन्ये

षामप्यंतरमस्ति तत्स्वल्पत्वान्नोक्तं अत्रोपपत्तिः अंत्यांकःपंचषष्ट्यधिकशत १६५ मितशीघ्रकेंद्रभागांतेअशीत्यधिकशत १८० भागांतेशून्य० तुल्यःपंचदशभागानांमध्यःसार्धाःसप्त ७।३० तेष्वंतरंभौमस्य १।३० शुक्रस्य २।३० अतोऽनुपातार्थंसार्धसप्तभागाल्पप्रयोजनात् पंचदशशुद्धाभागास्तयोरल्पाःगृहीताः यदिसार्धसप्तभागैरंतरेभौमशुक्रयोरेतेलभ्येते तदेभिर्भागैःकिं उभयत्रापिसार्धसप्तहरःस्वल्पांतरेगुणौगुणहरौगुणाभ्यामपवर्त्य जातौहरौमंगल ५ शुक्र ३ आभ्यांतेलब्धभागाःभाज्याः फलंशीघ्रफलसंबंधित्वात्स्पष्टयोःशीघ्रफलवद्धनर्णकार्यमित्युपपन्नं परंतुअनेनापिविशेषफलेनसंस्कृतौभौमशुक्रौमहांतरितौदृश्येते अंत्यांकबाहुल्यात् अत्रसुधीभिःएकान्त्यांकमध्येत्रींश्चतुरोवाअङ्का

कुजबुधभृगुजानांचेच्चलांकोंतिमःस्याद्दशहतपरिशेषांशानगाद्यग्निभक्ताः ॥

फलमिषुदहनैर्युक्सप्तगोभिस्त्रिबाणैर्भवतिगतिफलंतत्स्यात्तदानैवपूर्वम् ॥ १४ ॥

न्कृत्वा शीघ्रफलसिद्धिःकर्तव्या फलसाधनार्थंसूत्रंमयोक्तं "कुजसितचपलांकोंत्यस्तदाशेषभागस्त्रिलवमितगतांकस्तत्पराङ्कांतरेण॥विनिहतनिजशेषादग्नि ३ भागेनहीनःसचदशविहृतःस्यादंशपूर्वं फलंहि ॥ १॥ शीघ्रांकाःकुसुतस्यगोजिनमितादर्थेकेंदवोगेंद्रकाः शून्याशाद्विशराश्वखंत्वथभृगोस्तर्काश्विरामास्तथा॥शून्यांगाश्विमितागजांबरदशोब्धींद्रानवाश्वाश्वखंदेयंतच्चफलंफलंहिसकलंमंदस्फटेस्यात्स्फुटः॥ २"॥ १३॥अथतत्रैवांत्यांकागमनेभौमबुधशुक्रगतोनामपिविशेषमेकवृत्तेनाह कुजेति भौमबुधशुक्राणांशीघ्रांकोयदिअंतिमःस्यात् तदादशभिर्हतागुणितायेपरिशेषांशास्तेनगाद्यग्निभक्ताः भौमस्यसप्तभक्ताः बुधस्यापिसप्तभक्ताः शुक्रस्यत्रिभक्ताः यत्फलंकलाद्यंतद्भौमस्यइषुदहनैःपंचत्रिंशद्भिर्युक्तं

बुधस्यसप्तगोभिःसप्तनवत्यायुक्तं शुक्रस्यत्रिबाणैःत्रिपंचाशता ५३ युक्तं तत्तेषांगतेःशीघ्रफलंभवति तदापूर्वंभौमा

| ० | १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|---|
| २४९ | १९२ | १४६ | १०० | ५२ | ० | भौम |
| ३२६ | २६० | २०८ | १४४ | ७९ | ० | शुक्र |

चलांकविवरमित्यादिप्रकारेणानीतंतन्नग्राह्यं अनेनैवफलेनगतिःस्प ष्टाकर्तव्याअत्रप्रत्यक्षोपलब्धिरेववासना॥१४॥अथवक्रमार्गपरिज्ञा नार्थंशीघ्रकेंद्रभागान्वृत्तेनाह त्रिनृपैरिति कुजाद्याःभौमाद्याःपंचग्र हाःक्रमात्एभिःचलकेंद्रभागैः वक्रंवक्रारंभंयांति त्रिनृपैःत्रिषष्ट्यधि कशतेन १६३ शरजिष्णुभिःपंचचत्वारिंशदधिकशतेन १४५ श

त्रिनृपैःशरजिष्णुभिःशरार्कैर्नगभूपैस्त्रिभवैःक्रमात्कुजाद्याः ॥
चलकेंद्रलवैःप्रयांतिवक्रंभगणाप्तैःपतितैर्व्रजंतिमार्गम् ॥ १५ ॥

रार्कैःसपादशतेन१२५ नगभूपैःसप्तषष्ट्यधिकशतेन१६७ त्रिभवैःत्रयोदशाधिकशतेन११३ एतैर्भागैर्भगणात् चक्रभागेभ्यः३६० पतितैःशेषांशतुल्यस्वभागैर्मार्गंव्रजंतीत्यर्थः अत्रोपपत्तिः ग्रहस्यवक्रारंभेमार्गारंभेचगतिःशून्यं यदोच्चगतिसमाकेंद्रगतिस्तदैव अत्रग्रहाणांशीघ्रोच्चागतिर्ज्ञातैवास्तितयास्पष्टकेंद्रगतितुल्ययाभवितव्यं अत्रोदाह रणार्थंभौमस्यशीघ्रोच्चगतिः५९।८ तथातस्यमध्यमागतिः३१।२६ केंद्रगतिः२७।४२ इयंतथाशीघ्रफलकोटिज्यया गुण्याशीघ्रकर्णेनभाज्या यथाउच्चगतेःसमास्यात् तच्छीघ्रफलंकस्मात्केंद्रात्सिध्यतीतिविलोमेनशीघ्रकेंद्रंजायते अत

स्तेशीघ्रकेंद्रांशाःस्थिराउक्ताः तएवचक्रशुद्धाःमार्गेस्युः यतश्चक्रमध्येद्विवारंगतेरभावः ॥ १५ ॥ क्षितिजइति अष्ट
यमैःअष्टाविंशत्यंशैःशीघ्रकेंद्रस्यभौमःपूर्वेपूर्वस्यांदिशिउदेतिउदयंप्राप्नोति इंद्रैश्चतुर्दशभिःगुरुः रविजःशनिःसप्तचंद्रैः
सप्तदशभिःस्वस्वोदयभागसंविहीनैःभगणांशैःकृत्वा अपरत्रपश्चिमायांतेक्रमेणअस्तंयांतीत्यर्थः अत्रोपपत्तिः
पूर्ववत्कक्षानीचोच्चवृत्तप्रतिमंडलानिविनिर्दिशेत् भौमगुरुशनीनांरविःशीघ्रोच्चंबुधशुक्रयोरपिसाधितमस्ति अतोरवेःस
मसूत्रस्थोयदाग्रहोभवति तदापरमोस्तमयः यदार्धंतौलांशौभवतः अतएवोदयास्तमयेरवेरस्तमनानंतरंग्रहानदृश्य

क्षितिजोष्टयमैरुदेतिपूर्वेगुरुरिंद्रैरविजस्तुसप्तचंद्रैः ॥
स्वस्वोदयभागसंविहीनैर्भगणांशै ३६० रपरत्रयांतिचास्तम् ॥१६॥

ते शीघ्रत्वात् रविरस्तमासादयति तेनपश्चादस्तः उदयेशीघ्रत्वात् रवेरुदयात्प्रथमंदृश्यते तस्मात्प्रागुदयइत्युपपन्नं बु
धशुक्रौतुवक्रिणौपश्चादस्तंव्रजतः तयोर्विलोमगतित्वाद्रवेःप्राग्गतित्वाच्च अतएववक्रिणोःप्रागुदयः तयोरपगतित्वा
द्रवेःप्राग्गतित्वात् यदाधिकगतीभवतस्तदाशीघ्रत्वात्रविमासादयतः तस्मात्पूर्वास्तः तावेवशीघ्रगतित्वात्सूर्यंत्यक्त्वाऽ
ग्रतोगच्छतः अतएवास्तंगतेर्केपश्चिमायांतयोरुदयः उदयास्ताध्यायेयेकालांशाःउक्ताःस्पष्टार्कात्तदंशांतरितेग्रहेउद
योऽस्तोवास्यात्सस्थूलः इहयच्छीघ्रकेंद्रमुक्तंतन्मंदस्पष्टमध्यार्कांतरंस्यात् यथाभौमस्याष्टाविंशतिभागैःएकादश
भागाःफलं तैरधिकोभौमोर्काद्यावच्छोध्यते तावत्सप्तदशभागा १७ भवंति अतस्तावत्केंद्रउदयएभिश्चक्रशुद्धैरस्तः

स्यात् यतोत्रैभिर्भागैः ३३२ फलमेकादशभागाः तैरधिकोर्कोद्यावच्छोध्यते तावत्सप्तदशभागांतरंस्यात् एवंसर्वेषाम् ॥ १६ ॥ अथबुधशुक्रयोरुदयास्तकेंद्रांशानेकवृत्तेनाह खशरैरिति परेपश्चिमायांदिशिज्ञभृग्वोःबुधशुक्रयोरुदयः खशरैः५० जिनैः२४ क्रमात्स्यात् तत्रैवास्तं अक्षदिनैःपंचपंचाशदधिकशतमितै १५५ नगाद्रिभूभिःसप्तसप्तत्यधिकशत मितैः१७७ प्राक्पूर्वदिशितयोरुदयः अक्षनखैःपंचाधिकशतद्वयेन२०५ त्र्यष्टींदुभिःत्र्यशीत्यधिकशतेन१८३ तत्रास्तः

> खशरैश्चजिनैःपरेज्ञभृग्वोरुदयोस्तोऽक्षदिनैर्नगाद्रिभूभिः ॥
> उदयोऽक्षनखैस्त्र्यष्टींदुभिःप्रागस्तोदिग्दहनैश्चषट्सुरैःस्यात् ॥ १७॥
> वक्रोदयादिगदितांशकतोऽधिकाल्पाःकेंद्रांशकाःक्षितिसुताद्द्विगुणास्त्रिभक्ताः ॥
> सांकांशकादशहतांगहताःकुभक्तावक्राद्यमासदिवसैःक्रमशोगतैष्यम् ॥१८॥

दिग्दहनैःदशाधिकशतत्रयेण ३१० षट्सुरैःषट्त्रिंशदधिकशतत्रयेण३३६ स्यादित्यर्थः अत्रोपपत्तिःपूर्वमेवप्र तिपादिता ॥ १७ ॥ इदानींवक्रमार्गादिदिनज्ञानमेकवृत्तेनाह वक्रोदयादिति वक्रोदयास्तमार्गाणांयेगदि तांशाउक्तकेंद्रशीघ्रभागाः तेभ्यःअधिकाअल्पाइष्टदिनेयेकेंद्रभागाःस्युस्तदातेक्षितिसुतात् एभिर्हरैर्भाज्याः इष्ट केंद्रांशोक्तकेंद्रांशांतरांशाःभौमस्यद्विहताबुधस्यत्रिभक्ताः गुरोःसांकांशकाःसनवमांशाः शुक्रस्यदशहताःसंतोगैःष ड्भिर्हताभक्ताः शनेःकुभक्ताअविकृताएव आभिर्लब्धदिवसैर्वक्राद्यंवक्रोदयमार्गादिकंगतैष्यंस्यात् चेदिष्टकेंद्रांशाउ

क्तेभ्योऽधिकास्तदागतंअल्पास्तदागम्यमित्यर्थः अत्रोपपत्तिःसुगमा तथापिकिंचिदुच्यते उक्तशीघ्रकेंद्रतुल्यं
यदाशीघ्रकेंद्रंस्यात् तत्कालेउदयास्ताद्यंस्यादेव ऊनाधिकेऽनुपातः यदिशीघ्रकेंद्रगतिकलाभिरेकंदिनंतदांतरभाग
कलाभिःकिमतोंतरभागानांकलार्थंसर्वत्रषष्टिगुणःस्वकेंद्रगतिर्हरः तत्राचार्येणलाघवार्थंस्वल्पांतरत्वात्शीघ्रकेंद्रगतयो
मध्यमाएवगृहीताः तत्रभौमस्यशीघ्रकेंद्रगतिः२७।४२ अत्रगुणहरौहरेणापवर्त्यजातोगुणः २ बुधशीघ्रकेंद्रगतिः
१८६।२४ गुणहरौगुणेनापवर्त्यजातोहरः३ गुरोः ५४ गुणहरौषड्भिरपवर्तितौ गुणः१० हरः ९ योराशिर्द

पूर्वास्तादुदयःपरेऽनृजुगतिस्तोयास्तमैंद्युद्गमोमार्गोऽस्तोत्रचदंतदंतदहनाष्टयाज्या
शर्दंतैर्दिनैः।।चांद्रेस्ततपरतत्परन्त्वथभृगोस्तद्वद्विमास्याततोऽष्टाभिर्व्यग्निभुवांध्रि
णाविचरणैकेनाष्टमासैःक्रमात् ॥ १९॥

शभिर्गुण्यतेनवभिर्भज्यते सस्वनवमांशाधिकएवभवति एवंशुक्रस्यशीघ्रकेंद्रगतिः३७ अत्रगुणहरौषड्भिरप
वर्त्य गुणः १० हरः ६ अतोदशहतांगहृताः एवंशनेःशीघ्रकेंद्रगतिः ५७।८ गुणहरयोःसाम्यात्कुभक्ताइतिल
ब्धैर्दिनैर्वक्राद्यंगतैष्यंस्यादित्युपपन्नम् ॥ १८ ॥ अथबुधशुक्रयोर्मध्यमानिवक्रमार्गोदयास्तदिनानिसिद्धान्येकवृ
त्तेनवदति पूर्वास्तादिति पूर्वास्तात्परेपश्चिमायामुदयः ततोऽनृजुगतिर्वक्रं ततस्तोयास्तंपश्चिमास्तं ततः ऐंद्युद्गमः ततो

मार्गः ततःपूर्वास्तः चंद्रैःबुधस्यतत्परतत्परंएभिर्दिनैर्यथाक्रमंस्यात् एतैःकैस्तानेवाह दंताद्वात्रिंशत्३२ पुनस्तएव ३२
दहनास्त्रयः ३ अष्टिःषोडश१६ आज्याशाःअग्नयस्त्रयः ३ दंताद्वात्रिंशत् ३२ एभिर्दिनैरिति अथभृगोःशुक्रस्य
तद्वत्तेनैवक्रमेणैभिर्दिनैरुदयाद्यंस्यात् द्विमास्यामासद्वयेनततोष्टाभिरष्टमासैर्व्यग्निभुवाद्वाविंशतिदिनैःअंग्निणादिनाष्ट
केनविचरणैकेनद्वाविंशतिदिनैःअष्टमासैः अत्रोपपत्तिः पूर्वास्तशीघ्रकेंद्रांशाःपश्चिमोदयशीघ्रकेंद्रांशकेभ्योयावदंतरिता
स्तावदंशानांकलाःकेंद्रगतिभक्ताः दिनानिस्युः एवंचक्रमार्गादीनामपितत्तत्केंद्रांतराद्दिनानिस्युरित्युपपन्नम्॥ १९॥

भौमस्यास्तादुदयकुटिलर्जुत्वमौढ्यंक्रमात्स्यान्मासैर्वेदैरथदशमितैर्लोचनाभ्यांचदिग्भिः ।।
जीवस्योर्व्यासचरणयुगैःसागरैःसांघ्रिवेदैःसांघ्र्यैकेनत्रियुगदहनैरर्धयुक्तैस्तथार्कैः ॥२०॥

अथभौमगुरुशनीनामुदयास्तवक्रमार्गदिनानिवृत्तैकेनाह भौमस्येति भौमस्यअस्तात्उदयः ततःकुटिलंवक्रं ततः ऋ
जुत्वंमार्गत्वंमौढ्यमस्तंइदंक्रमात्स्यात् मासैर्वेदैश्चतुर्भिः ४ अथदश १० मितैर्लोचनाभ्यांद्वाभ्यां २ दिग्भिर्दशभिः१०
इतिजीवस्यगुरोस्तदेवास्ताद्यंउर्व्याएकमासेनसचरणयुगैःसपादचतुर्मासैःसागरैश्चतुर्भिः सांघ्रिवेदैःसपादचतुर्भिस्तथा
र्केःसांघ्र्यैकेनसपादैकमासेनअर्धयुक्तैस्त्रियुगदहनैःसार्धत्रिभिःक्रमात्स्यादित्यर्थः एतानिमध्यमानिस्पष्टानितेभ्यःकिं
चिदूनाधिकानिभवंति स्थूलत्वेनजनव्यवहारार्थमेतान्युक्तानि अत्रोपपत्तिःपूर्वमेवप्रतिपादिता दैवज्ञवर्यस्यदिवाकरस्य

सुतेनमल्लारिसमाह्वयेन ॥ वृत्तौकृतायांग्रहलाघवस्यजातःकुजादिस्फुटताधिकारः॥ २० ॥इतिश्रीसकलागमाचार्यवर्यग णेशदैवज्ञकृतग्रहलाघवस्यटीकायांदैवज्ञवर्यदिवाकरात्मजमल्लारिदैवज्ञविरचितायांभौमादिस्पष्टीकरणाधिकारस्तृती यः ॥ ३ ॥ अथत्रिप्रश्नाध्यायोव्याख्यायते त्रयःप्रश्नाअत्राधिकारेकथ्यंतइतित्रिप्रश्नः तेके दिग्देशकालाः तेषांपरि ज्ञानमितिदिग्देशकालादिभिरिष्टसमयादिकमवबुध्यते तदुच्यते तत्रादौलग्नोपयोगित्वाल्लंकोदयास्तेभ्यःस्वदेशीयक रणंचैकवृत्तेनाह लंकोदयाइति एतेविघटिकाःपलात्मकाःलंकोदयाःस्युस्तानेवाह गजभानिअष्टसप्तत्यधिकशतद्वयं

लंकोदयाविघटिकागजभानिगोंकदस्राम्त्रिपक्षदहनाःक्रमगोत्क्रमस्थाः ॥
हीनान्विताश्चरदलैःक्रमगोत्क्रमस्थैर्मेषादितोघटतउत्क्रमतस्त्विमेस्युः ॥१॥

२७८गोंकदस्राः एकोनत्रिशती२९९ त्रिपक्षदहनाः त्रयोविंशत्यधिकत्रिशती३२३एतेमेषादीनांत्रयाणांतएवोत्क्रम स्थाः कर्कादित्रयाणांएतेचरदलैःस्वदेशीयचरखंडकैःक्रमगोत्क्रमस्थैःहीनान्विताःकार्याः क्रमस्थैःत्रिभिःक्रमस्थास्त्र योहीनाः उत्क्रमस्थैस्त्रिभिःउत्क्रमस्थास्त्रयोयुक्ताः संतोमेषादितोमेषमारभ्यषण्णांराशीनामुदयाःस्युः एतएवोत्क्रमतो घटतस्तुलातःषट्उदयाःस्युरित्यर्थः अत्रोपपत्तिः क्रांतिवृत्तेक्षेत्रविभागेनद्वादशराशयस्तुल्यप्रमाणएवभवंति नाडीवृत्ते कालांशविभागेनसर्वेराशयःउदयंति निरक्षेतन्नाडीवृत्तंसमंपूर्वापरंसममंडलवद्भ्रमति क्रांतिमंडलंचदक्षिणोत्तरतस्तिर श्चीनमुदेति क्रांतिवृत्तस्थोमेषोयावत्तिरश्चीनउदेति तावद्विषुवद्वृत्तेष्टाविंशतिभागाःकिंचिन्न्यूनाः एवंसर्वेपिसाधनोपायो

यथासिद्धांतोक्तबृहज्ज्द्रयैवमेषादीनांत्रयाणांस्वक्रांत्यग्रेषुत्रीणिस्वाहोरात्रवृत्तानिविषुवत्उत्तरतोवध्नीयात् तथातुला
दिकानांविषुवद्वृत्ततोदक्षिणतस्त्रीणिस्वाहोरात्रवृत्तानिस्वक्रांत्यग्रेषुवध्नीयात् तत्क्रांतिमंडलेमेषांतेसूत्रस्यैकंअग्रंवद्ध्वा
द्वितीयमग्रंमीनादौवध्नीयात् एवंवृषमिथुनांतयोः सूत्राग्रेबद्ध्वा तयोर्द्वितीयाग्रकेकुंभमकरादौवध्नीयात् तेषांसूत्राणांयान्य
र्द्धानितानिक्रमेणमेषवृषमिथुनांतानांजीवास्तएवमीनकुंभमकराणांततस्ताभिःकर्कटसूत्राद्विषुवत्कल्पनं मध्येत्रीणिवृ
त्तानिकृत्वानिष्पादयेत् तत्रस्वजीवाकर्णःस्वक्रांतिज्यायाम्योत्तराभुजःकोटिरूर्ध्वाधरानज्ञायते मेषवृषयोःमिथुनज्यया
यद्वृत्तमुत्पद्यते तद्याम्योत्तरवृत्तमेवभवति तत्रैवोर्ध्वाधराकोटिःस्वाहोरात्रव्यासार्धतुल्याभवति मेषवृषयोरूर्ध्वाकोटिः
स्वाहोरात्रेनज्ञायते तत्परिज्ञानायानुपातद्वयं तद्यथा यदिमिथुनज्यात्रिज्याकर्णस्यमिथुनस्वाहोरात्रवृत्तव्यासार्धतु
ल्योर्ध्वाधरकोटिस्तदामेषज्याकर्णेनकेति ततोव्यासार्धवृत्तपरिणामायद्वितीयंत्रैराशिकं यदिमेषस्यस्वाहोरात्रवृत्तेएता
वतीकोटिस्तदात्रिज्यावृत्तेकिमिति एवंप्रथमंत्रिज्यागुणोनंतरंहरस्तुल्यत्वात्तयोर्नाशेकृतेमिथुनस्वाहोरात्रव्यासार्धस्यमे
षज्यागुणः मेषःस्वाहोरात्रवृत्तव्यासार्धंहरःफलंमेषस्यवृत्तेव्यासार्धेऊर्ध्वाकोटिः एवंवृषमिथुनयोःकोटीसाध्ये कोटिफ
लानांज्यारूपाणांधनूंषिकर्तव्यानि यतोवृत्तगत्याक्रांतिमंडलमुदेति अतोधनुःकरणंमिथुनकोट्याउदयंत्यामेषवृषावप्यु
दयतः अतोवृषचापंमिथुनचापाद्विशोध्यते मिथुनोदयप्राणाःस्युः मेषोदयप्राणायथागताएवतेचैतेमेषे १६७० वृषे
१७९५ मिथुने १९३५ एतेषड्भक्ताःपलानिस्युः यतःषड्भिरसुभिरेकंफलं एवंजातागजभानीत्यादयः मेषज्याकर्णःस
न्निहितत्वान्मेषकोट्याउदेति वृषज्याकर्णःकिंचिद्विप्रकृष्टत्वात्महत्यावृषकोट्याउदेति मिथुनज्याकर्णःविषुवन्मंडलाद्

तिदूरेस्थितत्वात् तिर्यक्त्वेनातिमहत्यामिथुनकोट्याउदेति ततोमिथुनांतादिभ्यांकर्कटाद्यंतौसमावतोमिथुनोदयप्राणाः
कर्कोदयःस्यात् एवंवृषमेषांतादिभ्यांसिंहकन्याद्यंतौसमौअतोवृषमेषसमौसिंहकर्कौद्वितीयमंडलार्धस्यविषुवतोदक्षिणे
नस्थितत्वात् मेषाद्युदयानामुत्क्रमेणोदयप्राणास्तुलादिषुभवंति एवंनिरक्षदेशे अन्यथायदिविषुवद्वृत्तेराशयःस्युस्तदापं
चघटिकाराश्युदयाःस्युः राशयश्चापमण्डलेतस्माद्भिन्नप्राणाराश्युदयानिरक्षेस्युः एतत्सर्वंयथास्थितनिरक्षगोलेदर्शयेत्
अथस्वदेशोदयोपपत्तिः अक्षवशाद्विषुवद्वृत्तमपितिर्यग्भवति तद्वशान्मेषादीनांस्वाहोरात्राण्यपितिर्यग्भवंति अतो
मेषादयःस्वचरार्धैर्वियुज्यंते मेषादयस्तिर्यक्कर्णरूपाःकर्णाच्चकोटिरल्पास्यात् क्रमाच्चरदलहीनाःस्वदेशोदयाः

तत्कालार्कःसायनःस्वोदयघ्नाभोग्यांशाःखत्र्यु ३० हृताभोग्यकालः ॥
एवंयातांशैर्भवेद्यातकालोभोग्यःशोध्योभीष्टनाडीपलेभ्यः ॥ २ ॥

स्युः अतोविषुवन्मंडलपादेनचरदलहीनेनायमपवृत्तपादःप्रथमंउदेति कर्कादयःव्यस्तैःचरदलैर्युक्ताःक्रियंते यतस्तेषांवि
परीतंतिर्यक्त्वंतेउत्क्रमचरखंडयुक्ताः कर्कादीनांत्रयाणामुदयाःस्युरितिअतःक्रांतिवृत्तपादोद्वितीयश्चरदलयुक्तेनविषुव
द्वृत्तपादेनोदेतीत्युपपन्नं द्वितीयपादवत्तृतीयः प्रथमवत्चतुर्थोऽपि वृत्तपादउदेति उक्तंचभास्करीयेसिद्धांते "मेषादेर्मिथु
नांतान्नाडोभिस्तिथिमिताभिरुद्दलये॥लगतिकुजेतदधःस्थेप्रथमंताभिश्चरोनाभिः॥ १ ॥कन्यांताद्धनुषांतस्तिथिमितनाडी
भिरुद्वृत्ते ॥ लगतिकुजेचोर्ध्वस्थेपश्चात्ताभिश्चराढ्याभिः॥ २ ॥" एवमत्रसंक्षिप्तोदयोपपत्तिर्विस्तरभयादुक्ता॥ १ ॥अथल
ग्नसाधनमाह यस्मिन्कालेलग्नंसाध्यतेतत्कालीनःसूर्यःसायनःअयनांशयुक्तःकार्यः अस्यसूर्यस्यराशिवशाद्यःस्वदेशीयः

उदयस्तेनभोग्यांशाःरवेस्त्रिंशत्च्युताः भुक्तभागाःगुण्याः तेखत्र्युद्धृतास्त्रिंशद्भक्ताःअंतेः कालाद्योरवेर्भोग्यकालः स्यात् एवंअमुनैवप्रकारेणसायनेस्ययातांशैःभुक्तभागैर्यातकालोभुक्तकालःस्यात् सयथा उदयगुणाभुक्तभागास्त्रिंशद्भक्ताःइतिलग्नभुक्तकालार्थमिदमुक्तं भोग्यःकालःइष्टघटीनांपलेभ्यःशोध्यः ततःकिंविधेयमित्यतआह ॥ २ ॥ तदनुतदनंतरंग्रहोदयांस्तदग्रराश्युदयांस्तस्मात्कालात्जहीहि यावंतःशुध्यंतितावंतःशोधयेदित्यर्थः यच्छेषंतद्गगनगुणघ्नंत्रिंशद्धृणं अशुद्धेनोदयेनहृतंभक्तंलवाद्यंभागाद्यंयल्लब्धंतत्अजादिगृहैःअशुद्धपूर्वैःसहितं अशुद्धोदयनःपूर्वैयावंतो

तदनुजहीहिग्रहोदयांश्चशेषंगगनगुणघ्नमशुद्धहृल्लवाद्यम् ॥
सहितमजादिगृहैरशुद्धपूर्वैर्भवतिविलग्नमदोयनांशहीनम् ॥ ३ ॥

मेषादयोराशयस्तेतस्यऊर्ध्वस्थानेस्थाप्याः तदयनांशहीनंसत् तात्कालिकराश्यादिलग्नंभवतीतिव्याख्या अत्रोपपत्तिःसुगमाक्रमसिद्धातथापिकिंचिदुच्यते अभीष्टकालेयःक्रांतिमंडलप्रदेशःक्षितिजेलग्नस्तल्लग्नमित्युच्यते उक्तंच सिद्धांते ‘ यत्रलग्नमपमंडलंकुजेतद्गृहाद्यमिहलग्नमुच्यते ’ तच्चलग्नमवधेःसाध्यं अवधिस्तुरविः तस्यमंडलेस्थितत्वात् सदैवरव्युदयेरविरेवलग्नंतस्यपूर्वगतित्वेनतात्कालिकंक्रियते प्रवहाक्षिप्तमपमंडलेइष्टघटीषुप्रत्यक्चलितं तदाक्षितिजेऽपमंडलप्रदेशोलग्नस्तज्ज्ञानायोपायः सायनार्केगयद्भोग्यं तत्रकालःसाध्यते यदित्रिंशद्भागैः३० रव्याक्रांतोदयपलानिलभ्यंते तदाभोग्यभागैःकिमिति एवंसत्भोग्यपलानिइष्टघटीपलेभ्यःशोध्यानि ततोयच्छेषंतस्मादुदयाःशोध्याः

यावंतःशुध्यंति तावंतःराशयःरवौयोज्याः यतोरविराशितोग्रेलग्नस्यैतावंतोराशयोजाताः तेतुअशुद्धपूर्वामेषादयो राशयएवभवंति शुद्धशेषपलेभ्योंशानयनवासनाऽनुपाताद्यथा यदिअशुद्धोदयपलैस्त्रिंशद्भागाःलभ्यंते तदाशेषपलैः किमिति फलंभागादितदशुद्धपूर्वमेषादिराशियुक्तंलग्नंस्यादेव तत्रायनांशाहीनाःकार्याः यतःपूर्वयोजिताःसंति पूर्वमुद यग्रहणार्थंअयनांशायोज्याएव यतःसर्वाणिविषुवायनचिह्नानिसायनान्येव ॥ ३ ॥ अथभोग्याल्पकालेलग्नसा धनमाह भोग्यतोभोग्यकालतः अल्पेष्टकालात् खरामाहतात्त्रिंशद्गुणितात् स्वोदयेनस्वराश्युदयेनहृतात् तस्माद्ये

भोग्यतोल्पेष्टकालात्खरामाहतात्स्वोदयाप्तांशयुग्भास्करःस्यात्तनुः ॥
अर्कभोग्यस्तनोर्भुक्तकालान्वितोयुक्तमध्योदयोभीष्टकालोभवेत् ॥ ४ ॥

आप्तांशाःलब्धभागास्तद्युक्तोभास्करस्तनुर्लग्नंस्यात् अत्रोपपत्तिः यद्युदयपलैःत्रिंशद्भागास्तदेष्टकालपलैःकिमितिसु गमा अथलग्नादिष्टकालसाधनमाह अर्कभोग्यइति अर्कस्यसायनस्ययोभोग्यकालः सःतनोर्लग्नस्यसायनस्य भुक्तकालेनअन्वितःयुक्तः ततःयुक्ताःमध्योदयाःयत्रसतथासूर्यस्यराश्युदयादग्रेलग्नराश्युदयात्पूर्वतउदयास्तद्युक्तःस न् अभीष्टकालोभवेदित्यर्थः अत्रोपपत्तिः इष्टकालेसूर्यादुदयपर्यंतंइष्टकालोवर्तते रविभोग्यभागानांकालस्तद ग्रतोराश्युदयास्ततस्तदनुभुक्तकालेतेषांयोगइष्टकालोभवतीतिसुगमं प्रत्यक्षंगोलेचदृश्यते ॥ ४ ॥

अथसूर्यलग्नेयदैकराशिस्थेतदेष्टकालानयनमाह यदीति यदिसायनौलग्नसूर्यौएकराशिस्थौतदातदंशानांतद्भागानांयदं
तरंतेनहतोगुणितोयःस्वोदयःसखाग्निहृत्त्रिंशद्भक्तः इष्टकालःस्यात्   इनतःसूर्यादुदयेलग्नंचेदूनंतदासकालःतदंशांतर
हतउदयइत्यादिनासाधितःकालःद्युरात्रात्षष्टेःशोध्यः एतदुक्तंभवति अर्कोदयात्पूर्वंकिललग्नमर्कादूनंभवति तत्रकाला
नयनेसायनौलग्नार्कौयदिभिन्नराशिस्थौभवतस्तदार्कभोग्यस्तनोर्भुक्तकालान्वितइत्यनेनकालंसाधयेत्   यदिचैकरा

यदितनुदिननाथावेकराशौतदंशांतरहतउदयःस्यात्खाग्निहृत्त्विष्टकालः ॥
इनतउदयऊनश्चेत्सशोध्योद्युरात्रान्निशितुसरसभार्कात्स्यात्तनूरिष्टकाले ॥५॥

शिगौतदातदंशांतरहतउदयइत्यादिनाकालःसमायाति रात्रिशेषःअर्कोदयाद्घटिज्ञानार्थंसषष्टेःशोध्यः रात्रिगतघटि
ज्ञानायरात्रिमानाद्वाशोध्यः अतएवाहुः 'शोध्योद्युरात्रादथवारजन्याइति' निशिरात्रौ सरसभार्कात्सषड्भसूर्यात्
इष्टकालेतनुर्लग्नंस्यादिति अत्रोपपत्तिः यदित्रिंशद्भिर्भागैःसूर्याधिष्ठितोदयपलानि तदातयोरंतरांशैःकिमिति फलमि
ष्टकालःस्यात् सूर्याल्लग्नेऊनेसूर्योदयात्पूर्वमेवभविष्यति अतःसकालःषष्टिशुद्धइत्युक्तं रात्रौलग्नसाधनार्थंरविःसषड्भः
कार्यएव यतःप्रागपरत्रक्षितिजयोरंतरंषड्राशयएवभवंति अतउदयलग्नषड्राशियुक्तंअस्तलग्नंभवति यत् उक्तंसिद्धांते

‘योभ्युदेतिसमयेनयेनतत्ससमोस्तमुपयातितेनच’ ॥ ५ ॥ अथगोलायनकथनंदिनरात्रिपलांशसाधनमेकवृत्तेनाह खेचरेसायनेग्रहेक्रियघटरसभेसौम्ययाम्यौगोलौस्तः मेषादिषड्राशिस्थेउत्तरगोलः तुलादिषड्राशिस्थेदक्षिणगोलः नक्रात्षड्भेमकरादिषड्भेउत्तरायणं कर्कात्षड्भेदक्षिणायनं अस्योपपत्तिः क्रांत्यभावोयत्रसगोलादिःक्रांत्यभावः सायनभुजाभावेभुजाभावोमेषादौतुलादौ अतस्तौगोलसंधीमेषादिषड्राशयःभचक्रेउत्तरार्धेसंत्यतउत्तरगोलः तुलाद्योदक्षिणार्धेतःसदक्षिणगोलः इतियत्रपरमक्रांतिस्तुभुजपरमत्वे भुजपरमत्वंचकर्कादौमकरादौ

गोलौस्तःसौम्ययाम्यौक्रियघटरसभेखेचरेथायनेतेनक्रात्कीटाच्चषड्भेथचरपलयु
तोनास्तुपंचेंदुनाड्यः ॥ घस्रार्धंगोलयोःस्यात्तदयुतखगुणाःस्यान्निशार्धंत्व
थाक्षच्छायेषुघ्न्यक्षभायाःकृतिदशमलवोनायमाशापलांशाः ॥ ६ ॥

च्चभवत्यतस्तावयनसंधी अथदिनरात्रीसाधयति पंचेंदुनाड्यःपंचदशघटिकाःगोलयोःचरपलयुतोनाःउत्तरगोलेयुक्ता दक्षिणगोलेहीनाः तत्घस्रार्धेदिनार्धंस्यात् तेनअयुताःखगुणाःत्रिंशत्निशार्धंरात्रिदलंस्यात् तेद्विगुणेदिनरात्रिमानेभवतइत्यर्थतएवसिद्धं अस्योपपत्तिः निरक्षदेशेअहोरात्रवृत्तेउन्मंडलात् याम्योत्तरवृत्तसंपातंयावत्सदापंचदशघटिका भवति क्षितिजोन्मंडलयोरेकत्वात् तथाप्रवहाक्षिप्तचक्रस्यसमपूर्वापरभ्रमणत्वात् अन्यदेशेक्षितिजोन्मंडलयोर्भिन्न

यातःशेषःप्राक्परत्रे इति नतो

एत्रेःशेषमितं युतं दिनदलेना न्नोगतशेषक "मिन्द्रेचखलपूर्वपश्चिमनतं त्रिंशच्युतं चो

न्नतं" पत्र यन्नितपदभयुक्तरवितःपञ्चान्नताद्दिर्युतो प्रकुकोदपकेच्युलेग्न

त्वात् तदंतरविनाडीभिःऊनाधिकाःपंचदशघटिकाःसंभवंति उन्मंडलक्षितिजयोरंतरंचरं उक्तंचभास्कराचार्येण"उन्मं डलक्ष्मावलयांतरालेद्युरात्रवृत्तेचरखंडकाल"इति उत्तरगोलेउन्मंडलादधःक्षितिजंस्थितं तस्माच्चरेणाधिकाःपंचदशघटिकाःक्रियंते तद्दिनार्धंस्यात् याम्येतुउन्मंडलादूर्ध्वंक्षितिजंतस्मात्तदूनाएवदिनदलंस्यात् ततस्तत्त्रिंशत्शुद्धंरात्रिदलं स्यादेव तेद्विगुणेदिनरात्रिमाने क्षितिजादस्तक्षितिजं यावत्अहोरात्रवृत्तेयावत्योघटिकास्तावद्दिनंक्षितिजादौविभागाद स्तक्षितिजपर्यंतंरात्रिमानं तत्सर्वंगोलोपरिदर्शयेत् वासनामात्रमुक्तं अथेति अक्षच्छायापलभाइषुघ्नीपंचगुणाअक्षभा याःकृतेःवर्गस्ययोदशमलवस्तेनऊनासतीयमाशायादक्षिणदिशः पलांशाःअक्षांशाःस्युः अत्रोपपत्तिः यदिफलकर्णेपल

यातःशेषःप्राक्परत्रोन्नतःस्यात्कालस्तेनोनंद्युखंडंनतंस्यात् ॥

अक्षच्छायावर्गतत्वांशयुक्तामार्तंडाःस्यादंगुलाद्योऽक्षकर्णः ॥ ७ ॥

भाभुजः तदात्रिज्याकर्णेकः फलमक्षज्यातद्धनुरक्षांशाःजाताः धनुरानयनवासनापूर्वोक्तैव अत्रैकांगुलांपलभांप्रकल्प्य अक्षांशाःसाधिताः४।५४यद्येकांगुलयापलभयाएतेतदेष्टयाकइति एभिःपलांशाःगुण्याइत्यत्रैषांपंचैवगृहीताः अतःपंच गुणपलभापलांशाइति अधिकंखंडंगृहीतमिदं०।६ इदंपलभावर्गस्यदशमांशेनसमं अतस्तदूनाएवकार्याः अधिकस्यगृ हीतत्वात्तेसदादक्षिणाएव यतोलंकातःउत्तरेसममंडलान्नाडिकामंडलंदक्षिणतएवसदावर्तते लंकातोदक्षिणेमनुष्यसंचा रएवनास्ति अतस्तेनोक्ताः अथनतोन्नतसाधनमाह ॥ ६ ॥ प्राक्पूर्वकपालेयातःभुक्तःकालःउन्नतःस्यात् अपरत्रप श्चिमकपालेशेषउर्वरितःउन्नतकालःस्यात् तेनऊनंद्युखंडंदिनार्धंनतःकालःस्यात् अत्रोपपत्तिः दिनकरकरनिकरनिह

मिचततमाध्यं षषड्भं सुखं २ ८॥

ततमसोनभसोवृत्ताकारतैवप्रतिभासते तस्ययाम्योत्तरवृत्तमवधिंकृत्वाद्वेकपालेपरिकल्पिते तत्रयत्रस्थोरविरुदयंया
ति तत्पूर्वकपालं यत्रास्तमुपयाति तत्पश्चिमकपालं यतोरविरेवपूर्वादिदिग्भिव्यंजकः ततःपूर्वक्षितिजाद्यावताभीष्टकाले
नरविरुन्नतस्तावानुन्नतकालइत्यभिधीयते अपरकपालेस्तक्षितिजाद्यावान्शेषकालःसउन्नतकालःस्यात् उन्नतंकाल
दिनार्धादपास्य यःशेषकालःतेनरविर्मध्याह्नतोनतोभवति अपरकपालेरविदिनार्धयोरंतरेयःकालःसएवनतोभवति
मध्याह्नाद्रवेस्तावताकालेननतत्वादिति अथाक्षकर्णसाधनमाह अथअक्षच्छायायाःपलभायाःयोवर्गस्तस्यतत्वांशः

वेदेशाःशरहृच्चराढ्यरहिताःसौम्यानुदग्गोगलयोर्हारोथोघटिकार्धयुग्नतकृते
द्व्यंशःसमाख्यःस्मृतः ॥ चेत्सार्धत्रिकृतोनतंयदधिकंवेदाहतंतद्वियुक्स्पष्टोऽसौ
तदयुग्हरस्त्वभिमतःस्यादक्षकर्णोद्धृतः ॥ ८ ॥ '

पंचविंशत्यंशःतेनयुक्तामार्तंडाःद्वादशअंगुलाद्यःअक्षकर्णःस्यात् अत्रोपपत्तिः पलभाभुजःद्वादशांगुलशंकुःकोटिः प
लकर्णःकर्णएवंपलभावर्गोद्वादशवर्गयुक्तः तस्यमूलंपलकर्णःस्यात्, अत्रैकांगुलपलभायांजातःपलकर्णः १२।२।२४
अस्माद्द्वादशविशोध्यशेषं ०।२।२४ इदंफलभावर्गतत्वांशतुल्यं अतस्तद्युक्ताःद्वादशपलकर्णाःस्यादित्युपपन्नं अथे
ष्टच्छायासाधनार्थंहारमाह ॥ ७ ॥ वेदेशाःचतुर्दशाधिकशतमिताःशरहृच्चरेणपंचभक्तचरेणसौम्यानुदग्गोलयोःआ
ढ्यरहिताः उत्तरगोलेयुक्ताः दक्षिणेरहिताःसंतःहारःस्यात् अथहारकथनानंतरंघटिकार्धयुक्त्रिंशत्पलयुक्यन्नतंत

स्ययाकृतिःतस्याःयोद्धंशःअर्धांशःसमाख्यःस्मृतः अत्रोपपत्तिः अत्रगोलेअहोरात्रवृत्तेक्षितिजसंपातयोर्बद्धंसूत्रं तदुद
यास्तसूत्रंएवमुन्मंडलसंपातयोर्बद्धंतदहोरात्रव्याससूत्रंतदुदयास्तसूत्रयोःअंतरंकुज्यैव अथयाम्योत्तरवृत्तसाम्यात्तयोर्ब
द्धं तन्मितंतस्यव्याससूत्रं तयोर्व्याससूत्रयोर्यःसंपातस्तस्माद्रुपरितनंखंडंद्युज्या साउत्तरगोलेअधस्तनयाकुज्ययायुता
यावत्क्रियतेतावद्दिनार्द्धेअर्कोदयास्तसूत्रयोरंतरंस्यात् दक्षिणेतुकुज्ययाहीनायतः अत्रोदयास्तसूत्रादधःकुज्यायदर्को
दयास्तसूत्रयोरंतरंसात्रहृतिरित्युच्यते एवमंत्यापिचरज्ययात्रिज्यायुतोनादिनार्धांत्यास्यात् अहोरात्रव्यासार्धंत्रि
ज्यातुल्यैरंकैरंक्यतेतावत्त्रिज्यातुल्यंभवति तैरंकैर्यावत्कुज्यागुण्यते तावच्चरज्यातुल्याभवति अतश्चरज्ययात्रिज्या
युतोनान्त्यासंज्ञाभवति नान्त्याहृत्योःक्षेत्रसंस्थानभेदः किंतुअंकानांगुरुलघुत्वात्केवलःसंख्याकृतोभेदइत्युपपन्नं
तत्रतावत्अंत्यार्थंचरज्यासाध्या सायथा चरपलानिषष्टिभक्तानिनाड्यःस्युः ताःषड्गुणाःभागाःस्युः तेद्विगुणाःजीवा
अत्रचरपलानांहरः ६० गुणद्वयघातोगुणः १२ गुणहरयोर्गुणोनापवर्तितयोःलब्धाःपंच अतउक्तंशरहृच्चरेणेति शर
हृच्चरंचरज्याजातातयात्रिज्यासौम्ययाम्यगोलयोःक्रमेणयुतोनाकार्या अत्राचार्येणत्रिज्यावेदेशमिताधृता अ
तोवेदेशाइति एवंजातादिनार्धांत्यातस्याःहरसंज्ञाकृता इयंदिनार्धांत्यानतोत्क्रमज्ययाहीनासतीष्टांत्यास्यतएवम
त्रनतोत्क्रमज्याघटिकार्धयुक्तस्यनतस्यवर्गेणदलितेनतुल्याभवति अत्रप्रतीत्यर्थंकल्पितंनतं ५ इदंषड्गुणमंशः ३० ए
षांखार्के १२० मितेव्यासार्द्धेउत्क्रमज्या १६ यदिखार्केमितेव्यासार्धेइयंतदावेदेशतुल्येकेति जाताः १५ । १२ घटि
कार्धसंयुक्तंनतं ५ । ३० अस्यवर्गः ३० । १५ । तदर्धं १५ । ७ एवंस्वल्पांतराजातानतोत्क्रमज्यैव तस्याः

समसंज्ञाकृता चेन्नतंसार्धत्रयोदशाधिकंस्यात्तदातत्सार्धत्रयोदशहीनंकृत्वायदधिकंतद्देदैश्चतुर्भिःअहतंगुणितंतेनवियुक्
हीनःसमाख्यःस्फुटःस्यात् तेनसमाख्येनअयुग्हीनःहरःअक्षकर्णेनउद्धृतोभक्तःइष्टहरःस्यादित्यर्थः अत्रोपपत्तिः
अत्रसमाभिधायानतोत्क्रमस्यासाधितासासार्धत्रयोदशनतपर्यंतंभवति ततःपरंसांतरा अत्रकल्पितंनतं १४ । ३०
अस्यनतस्यवेदेशतुल्याइति ११४ त्रिज्यायामुत्क्रमज्या १०८ । ३० घटिकार्धयुक्तनतस्य १५ वर्गोद्द्यातः
१२ । ३० अत्रानयोरंतरंचत्वारः ४ तदंतरमेकघटिकायांचतुर्मितं तत्रानुपातः यद्येकघटिकायांचत्वारोंतरं तदेष्टे

दिग्घ्नाक्षमाहृतचरंस्वगुणंद्विनिघ्नंस्वेष्वंशयुग्युगभवान्वितमत्रभाज्यः ॥
कर्णांगुलादिकइहेष्टहराप्तभाज्यःकर्णार्कवर्गविवरात्पदमिष्टभास्यात् ॥ ९ ॥

नसार्धत्रयोदशाधिकेननतेनकिमिति फलंहीनंकार्यंअधिकभूतत्वात् ततस्तेनहीनोहरइष्टहारःस्यात् यतोनतो
त्क्रमज्याहीनादिनार्धंत्याइष्टांत्याभवति साइष्टहरसंज्ञा अत्राक्षकर्णभजनेयुक्तिस्त्वनुपदमेवस्पष्टीकरिष्यते अ
थभाज्यसाधनमाह ॥ ८ ॥ दिग्घ्नाक्षभयादशगुणफलभयाहृतंचरंस्वगुणंवर्गितंततोद्विनिघ्नंद्विगुणंसत्स्वेष्वं
शकेनस्वपंचमांशेनयुक् ततोयुगभवैःअन्वितंसत्भाज्योभवति अत्रोपपत्तिः अथभाज्यस्वरूपमुच्यते इष्टहरसंज्ञे
ष्टान्त्याज्ञातास्ति तस्याःहृतिकरणायानुपातः त्रिज्यावृत्तेइयमंत्यातदाद्युज्यावृत्तेकेति जातेष्टहृतिः पलकर्णेद्वादश
कोटिस्तदेष्टहृतिकर्णेकेति जाताइष्टशंकुः शंकुकोटौकर्णस्त्रिज्यातदाद्वादशकोटौकइति जातइष्टकर्णः एवमत्रत्रिज्या

वर्गस्यपलकर्णोगुणः द्युज्येष्टांत्याघातोहरः तेनत्रिज्यावर्गोद्युज्याभक्तः फलस्यभाज्यसंज्ञाकृता तत्रपरमाल्पद्युज्यया १०८ । ४० । त्रिज्यावर्गेभक्तेज्ञातःपरमोभाज्यः ३१ । २० खार्कमितेव्यासार्धेऽयंतद्रावेदेशमितेकइति जातोभाज्यः १२४ । ४५ सभाज्यफलकर्णगुणाइष्टांत्याभक्तःकार्यः तत्रपलकर्णगुणेनगुणहरापवर्तितौ एवंपलकर्णेभक्तेष्टांत्यैवेष्टहरसंज्ञाकृता अतइष्टहरात्तभाज्यइष्टकर्णःस्यादित्युपपन्नं अस्यसाधनप्रक्रियाद्युज्याक्रांतिज्याविनानसिध्यति तत्प्रक्रियागौरवमतोनुकल्पेनदिग्घ्नाक्षमयेत्यादिनाभाज्योज्ञातः अनुकल्पःसयथा एकांगुलपलभायांखंडत्रययोगःपरमंचरं २१।

कर्णःस्यात्पदमर्कभाकृतियुतेस्तद्भक्तभाज्योहरोभीष्टस्तत्पलकर्णघातरहितोम
ध्योहरोद्ध्याहतः॥चेद्वेदांकधराधिकःपृथगतोवेदांकभूनाद्गुणात्याढ्यास्तस्यपदंघ
टीमुखनतंस्यादर्धनाडीवियुक् ॥ १० ॥

२० इदंदशगुणपलभाभक्तं २ । ८ वर्गितं ४ । ३३ द्विगुणं ९ । ६ इदंस्वपंचांशयुतं १० । ५५ वेदेशयुतंसएवभाज्यइतिप्रतीतः अयंभाज्योहरहतोभीष्टकर्णोभवति इतियुक्तिःपूर्वमेवोक्ता कर्णार्कवर्गद्वादशवर्गान्तरान्मूलं इष्टभाइष्टच्छायास्यात् अस्योपपत्तिः छायाभुजः द्वादशांगुलशंकुः कोटिःछायाकर्णः अतःकोटिकर्णयोर्वर्गांतरमूलंछायाभवतीत्युपपन्नं अथेष्टच्छायातोविलोमविधिनाकर्णाद्यानयनमाह ॥९॥ अर्कभाकृतियुतेःपदंद्वादशवर्गच्छायावर्गयोर्मूलंकर्णःस्यात् तेनकर्णेनभक्तोभाज्यःअभीष्टहरःस्यात् तस्याःपलकर्णेनसहयोघातोगुणनंतेनमध्योहरोरहितःद्विगु

णित:सशतद्वयाधिक:तदापृथक्स्थाप्य: अतोस्माद्वेदांकभूनात् पृथक्स्थात्यागुणाप्ति: तयाआढ्य:कार्य: नोचेद्यथा स्थितएवतस्यमूलंघटीमुखंघटिकादिनतंस्यात् परंतुतन्नतमर्धनाड्यात्रिंशत्पलैर्वियुक्हीनंकार्यमित्यर्थ: अत्रोपपत्ति:विलोमविधिनाप्रसिद्धैव अथक्रांतिसाधनमाह ॥ १० ॥ सायनात्अयनांशयुक्तात्खेटात् दोर्लवाभुजभागास्तेषांदिग्लवो दशमांश:तेनप्रम:संमित:गत:अंक:स्यात् अतस्तेनगतांकेनऊनात्अगतात्अग्र्यांकात्शेषघ्नात् शेषांशगुणितात् याद शलब्धि: तयागतांकयुक्युक्त: ततोदशभक्त: अंशाद्य:भागाद्य:स्वदिक्सायनग्रहगोलदिक् अपम:क्रांति:स्यात्

चत्वारिंशदशीतिरद्रिकुभुव:कक्षेंदवोभूधृतीषट्खाक्षीणिजिनाश्विनोंगविकृती
खाब्ध्यश्विन:सायनात् ॥ खेटाद्दोर्लवदिग्लवप्रमगतोंकोसौतदूनागताच्छेषघ्ना
द्दशलब्धियुग्दशहृतोंशाद्योपम:स्यात्स्वदिक् ॥ ११ ॥

चत्वारिंशत् ४० अशीति: ८० अद्रिकुभुव:सप्तदशाधिकशतं ११७ कक्षेंदव: एकपंचाशदधिकंशतं १५१ भूधृतीए काशीत्यधिकशतं १८१ षट्खाक्षीणिषडधिकशतद्वयं २०६ जिनाश्विन: चतुर्विंशत्यधिकशतद्वयं २२४ अंगविकृती षट्त्रिंशदधिकशतद्वयं २३६ खाब्ध्यश्विन: चत्वारिंशदधिकशतद्वयं २४० एतेनवांका:स्युरिति अत्रोपपत्ति: ग्रहोयै र्भागैर्विषुवद्वृत्ताद्दक्षिणोत्तरगमनंकरोति तेक्रांत्यंशा: क्रमणंक्रांति: तस्यअंशाइत्यन्वर्थंनामविषुवद्वृत्तंयद्वर्त्तते तन्नि

रक्षेसमंपूर्वापरमित्यर्थः मेषतुलादिस्थोग्रहस्तस्मिन्वृत्तेतिष्ठन्भ्रमति मेषादयःषट्तस्योत्तरार्धेतुलादिकादक्षिणाएवनतु
मेषादिषड्राशयः उत्तरतश्चैकत्रावतिष्ठंतोभ्रमन्तीति किंतुमेषादिराशित्रयंयावत्प्रतिक्षणमुत्तरतः क्रमेणचतुर्विंशत्यं
शान् यावदहोरात्रवृत्तेपरिभ्रमन्नूगच्छति ततःपरावर्त्यराशित्रयंकन्यांतंयावत्तेनैवमार्गेणपुनस्तदेवविषुवद्वृत्तमाश्रयति
एवंतुलादेर्दक्षिणतएवराशित्रयंगत्वा पुनस्तेनैवपथापरावर्त्यतदेवविषुवद्वृत्तंमेषादिस्थएवाश्रयति एवंभगोलेतद्दिक्स्थक्रां
तिरितिपरिभाषा एवंसूर्यस्यअन्योन्यंग्रहनक्षत्राणांस्वस्वविमंडलानूगतत्वात् गोलार्धयोर्वैपरीत्यसंभवःस्यादिति तद्य
थाविषुवद्वृत्तात्क्रांतिवृत्तंतिरश्चीनंवर्ततेतयोर्मेषतुलादौसंपातद्वयं तत्रक्रांत्यभावः मकरकर्कटादौपरमंदक्षिणोत्तरंचतुर्विं
शत्यंशांतरंतत्रक्रांतेःपरमत्वंएवंतिरश्चीनात्क्रांतिमंडलादपिग्रहमंडलंतिरश्चीनंवर्तते तयोःस्वक्षेपपातेसषड्भेचसंपातौ त
स्मात्त्रिभेंतरेपरमंविक्षेपांशतुल्यंदक्षिणोत्तरमंतरंविक्षेपः एवंपृथग्ग्रहनक्षत्राणांविमण्डलानितिरश्चीनानिवर्तं तेतत्क्षेपव
शात् गोलान्यत्वसंभवःस्यादित्युपपन्नं तदुक्तंसिद्धांतशिरोमणौ 'नाडिकामण्डलौतिर्यगेवापमःक्रांतिवृत्तावधिः क्रांतिवृ
त्ताच्छरः॥क्षेपवृत्तावधिस्तिर्यगेवंस्फुटोनाडिकावृत्तखेटांतरालेपमः॥१॥'अतःशरसंस्कृतास्पष्टाक्रांतिःस्यादित्यग्रे आचा
र्येणाप्युक्तमस्ति अत्रगुणकभाजकोपपत्तिर्यथा यदित्रिज्यातुल्यभुजज्ययापरमक्रांतिज्यातदेष्टदोर्ज्ययाकिमिति फलं
क्रांतिज्यातद्धनुःक्रांतिःस्यात् अत्राचार्येणलाघवार्थंदशभुजगानांअनेनैवविधिनाक्रांत्यंशाःसाधिताः तेसावयवाजाताः
अतोदशगुणाःकृत्वापठिताः ततोंऽतरेनुपातः यदिदशभिर्भागैरेकोलभ्यते तदेष्टांशैःकिमिति फलमितोगतांकःस्यात् शे
षादप्यनुपातः यदिदशभिर्भागैर्गतैष्यांतरंलभ्यतेतदाशेषांशैःकिमिति फलंगतांकेयुक्तंकार्यंसाक्रांतिःस्यात् परंदशगुणा

स्ततोदशभक्तेत्युपपन्नं अथलाघवार्थंस्थूलंक्रांतिसाधनमाह ॥ ११ ॥ एभिरर्धैःखंडैःकृत्वाखेटस्यसायनग्रहस्ययेभुजां
शाःभुजभागाःतेषांयोदिनांशःपंचदशांशःतन्मितखंडैक्यंकार्यं तच्छेषेणहतंयत्एष्यंभोग्यखंडंतस्ययोदिनांशःपंचदशां
शःतेनयुतंतत्अंशादिअपमःभागादिक्रांतिःसुखेनसंव्यवहृतिःव्यवहारस्तदर्थंस्यात् अत्रोपपत्तिः अत्रतुपंचदशभागा
नांक्रांतयोभागादिकाःसाधिताः तत्रानुपातः यदिपञ्चदशभागैरेकंखंडंतदाभुजभागैःकिमिति लब्धंगतखंडानांयोग

षट्षडिषूदधिद्विकुभिरर्धैःखेटभुजांशदिनांशमितैक्यं ॥
शेषहतैष्यदिनांशयुतंवांशाद्यपमःसुखसंव्यवहृत्यै ॥ १२ ॥
ततोदलानिशोधयेत्तिथिघ्नशेषमैष्यहृत् ॥
तिथिघ्नशुद्धसंख्ययायुतंभवंतिदोर्लवाः ॥ १३ ॥

मिताक्रांतिः अत्रतुपंचदशभागानांक्रांतिभोग्यखंडंलभ्यते तदाशेषांशैःकिमिति फलं गतखंडयोगयोग्याक्रांतिः
स्यात् परंसास्थूला खंडभागोनाधिककलापरित्यागादित्युपपन्नम् ॥ १२ ॥ ततस्तस्मादपमात्दलानिषडित्यादी
नियावंतिशुध्यंतितावंतिशुद्धयेत् तिथिभिःपंचदशभिःहन्यतेगुण्यतेयच्छेषंतदैष्येणभोग्यखंडेनहृद्धक्तंलब्धंतिथिघ्नयापं
चदशगुणयाशुद्धखंडसंख्ययायुतंसत्दोर्लवाःभुजभागाःभवंतीत्यर्थः अत्रविलोमविधिरेववासनाप्रत्यक्षसिद्धास्ति य
द्यनेनप्रकारेणप्रागतीतसूक्ष्मक्रांतितोदोर्लवाःसाध्यंते तदाकिंचित्सांतराभवति अपमखंडानांस्थूलत्वात् अतस्तत्र

त्यखंडैर्दोर्लेवार्थैर्व्यस्तविधिनाप्रकारांतरंचिंत्यं तद्यथा "दशाहतापमात्यजेद्दलानिशेषमैष्यहृत् ॥ विशुद्धसंख्यया युतंदशाहतंभुजांशका" इति अथरवेरज्ञानेदिनमानादेवक्रांतिसाधनंस्थूलंस्वयुक्तिदर्शनार्थमाह ॥ १३ ॥ द्युदलं दिनार्धंतिथयःपंचदशतयोर्वियोगःषष्टिगुणःपलानिस्युः तच्चरंनिजेनस्वीयेनगजभागेनअष्टांशेनउपेतंयुक्तं ततःअक्षप्रभयाआप्तंभक्तंतेदिनकृतःसूर्यस्यअपमस्यक्रांतेःभागाःस्युः तेतत्त्वकलाभिःपंचविंशतिकलाभिःयुक्ताःकार्याः द्युदलस्यपंचदशघटिकाभ्योन्यूनाधिकत्वेक्रमात्याम्यसौम्याः कृशत्वेयाम्याः अधिकत्वेसौम्याइत्यर्थः अत्रोपपत्तिः दिनार्धपंचदशानंतरंफलीकृतंचरफलानिस्युः एवंचरफलानिपंचभक्तानि चरज्येतियुक्तिःपूर्वंप्रतिपादितास्ति ततस्त्रिज्यावृ

द्युदलतिथिवियोगस्तद्विनाड्यश्चरंस्यादथनिजगजभागोपेतमक्षप्रभाप्तम् ॥
दिनकृदपमभागास्तत्वलिप्तायुताःस्युर्द्युदलकृशपृथुत्वेतेक्रमाद्याम्यसौम्याः ॥१४॥

त्तेइयंचरज्यातदाद्युज्यावृत्तेका लब्धंकुज्या अत्रद्युज्यास्थूलत्वात् सार्धद्वादशाधिकशतमिताधृता एवंपलभाभुजेद्वादशकोटिःतदाकुज्याकुजेकाकोटिरिति जाताक्रांतिज्यातद्धनुकरणार्थंद्वौहारःस्थूलत्वादंगीकृतः एवंचरफलानांजातोगुणघातोगुणः१३५० हरघातोहरः१२०० पलभाहरस्तुवर्ततएव गुणहरौखतिथिभि१५० रपवर्तितौगुणस्थानेजातः९ हरस्थानेष्टौ८ याराशिर्नवभिर्गुण्यतेअष्टभिर्भज्यतेसःस्वाष्टांशयुक्तएवंभवति अतउक्तं "चरंनिजगजभागोपेतमक्षप्रभाप्तमि"ति सास्थूलाक्रांतिरतःपंचविंशतिकलायुक्तासतीसूक्ष्मासन्नाद्दष्टा दक्षिणोत्तरोपपत्तिर्यथा दिनदलंदक्षिणगोलेपंचदशघटिकाभ्योन्यूनमस्ति अतःकृशेयाम्याः उत्तरगोलेदिनदलंपंचदशाधिकं अतःपृथुत्वेसौम्याइत्युपपन्नम् ॥१४॥

अथदिनार्धेनतांशोन्नतांशसाधनमाह ग्रहस्यक्रांतिःअक्षांशाःस्वदेशीयाः एतद्युत्सन्नायासंस्कृतिःसानतांशाःस्युः अत्रै
कदिशोर्योगःभिन्नदिशोरंतरमितिसंस्कृतिः तैर्नतांशैर्हीनानवतिःउन्नतांशाःस्युः परंतेदिनमध्यभवाः नहीष्टकाले
क्रांत्यक्षसंस्कारोनतांशाः ततोपितेभ्यःउन्नतभागेभ्यःलघुखंडकैःषडित्यादिभिःयेक्रांत्यंशाःस्युः तेषांपरइतिसंज्ञा
अत्रपराख्यार्थयाक्रांतिःयंत्रभागानांचक्रांतिःसाअयनांशान्दत्त्वैवकार्या अस्योपपत्तिःप्रत्यक्षसिद्धास्ति तथाप्यु
च्यते विषुवद्वृत्ताद्दक्षिणोत्तरतःपरतःपरमक्रांत्यंशैःक्रांतिवृत्तंभवति रवौक्रांतिवृत्तेभ्रमतिसतिद्युरात्रवृत्तंदक्षिणोत्तरवृत्तेदि

क्रांत्यक्षजसंस्कृतिर्नतांशास्तद्धीनानवतिःस्युरुन्नतांशाः ॥
दिनमध्यभवास्ततोपियेस्युःक्रांत्यंशालघुखंडकैःपराख्यः ॥ १५ ॥

नार्धेयत्रलग्नंतस्मात्प्रदेशात्खस्वस्तिकपर्यंतंनतांशाः खस्वस्तिकात्तैर्भागैर्दिनार्धेसूर्योवर्ततएवेत्यर्थः दक्षिणोत्तरवृत्त
क्षितिजसंयोगाद्दिनार्धेयैर्भागैरुन्नतस्तेउन्नतांशाः रवद्युरात्रवृत्तविषुवन्मंडलमध्येक्रांत्यंशाः खस्वस्तिकात्द्युरात्र
वृत्तपर्यंतंनतांशाः दक्षिणगोलेक्रांत्यक्षांशयोर्योगेकृतेसतिखस्वस्तिकाद्द्युरात्रवृत्तपर्यंतंदक्षिणनतांशाः उत्तरगोलेक्रांत्यक्ष
योरंतरेकृतेसतिउत्तरादक्षिणावानतांशाः यदोत्तरक्रांतिरक्षांशेभ्योन्यूनातदाक्षांशेभ्यःक्रांतौशोधितायांदक्षिणतोद्युरा
त्रवृत्तंनतंस्यात् तदादक्षिणानतांशायदाधिकास्तदा क्रांत्यंशेभ्योक्षांशेषुशोधितेषुखस्वस्तिकादुत्तरतोद्युरात्रवृत्तंनतंस्यात्त

दोत्तरानतांशाःस्युः अतउक्तंक्रांत्यक्षजसंस्कृतिरिति अत्रोन्नतांशजीवायाःउपयोगोस्तिइष्टकर्णसाधनार्थं अतोऽ
त्राचार्येणत्रिज्याचतुर्विंशतिमिताधृता ततःपंचदशभागानांखंडान्युत्पादितानितुक्रांतेर्लघुखंडान्येव अत्रउन्नतांशा
नांक्रांतिःकार्येत्युक्तं तस्याःपरसंज्ञाकृता अथान्यथालाघवेनेष्टकर्णंसाधयति ॥ १५ ॥ इष्टउन्नतंघटिकाढ्यंनवति
घ्नुदलेनहृतंफलंयद्भागाद्यं ततःअपमःक्रांतिःसोपमःकथितेनपराख्येनगुण्यः ततस्तेनरविनवषट्उद्धृताःभक्ताः अथवाप्र
कारांतरेणश्रवणःइष्टकर्णोभवतीत्यर्थः अत्रोपपत्तिः उन्नतघटिकानांभागकर्णार्थमनुपातः यदिद्युदलघटीभिर्नवत्यं

नवतिगुणितमिष्टमुन्नतंद्युदलहृतंफलभागतोपमः ॥
कथितपरगुणस्तदुद्धृताररविनवषट्श्रवणोथवाभवेत् ॥ १६ ॥

शाःतदेष्टोन्नतघटीभिःकिमिति जाताःभागाःतेषांज्याकार्या अतोपमःकार्यइति अत्रज्याक्रांतितुल्यैवधृतास्ति ततो
न्योऽनुपातः यदिपरसंज्ञोन्नतांशज्याकोटौत्रिज्या२४ कर्णः तदाद्वादशकोटौकःकर्णः एवंद्वादशसिद्धघातोभाज्या
२८८ पराख्योहारः एवंजातोदिनार्धकर्णः अन्योप्यनुपातः यदित्रिज्यातुल्ययाउन्नतघटिज्यया २४ अयं
दिनार्द्धकर्णस्तदेष्टोन्नतघटिज्ययाकिमिति एवंलब्धमिष्टकर्णः अत्रव्यस्तत्रैराशिकं यतःसर्वदादिनार्धकर्णादिष्टकर्णे
नाधिकेनैवभवितव्यं अतश्चतुर्विंशतिगुणः एवंभाज्यांकेचतुर्विंशतिगुणेजातःसिद्धोभाज्यांकः ६९१२ अस्यपराख्यः

उन्नतघटीजातोपमश्च ३ अतोपमःपरगुणः तद्गुद्धृतारविनवषडित्युपपन्नम् ॥१६॥ अथवास्तविधिनाइष्टकर्णाद्दुन्नत घटिकाज्ञानमाह तरणीनवरसाःश्रवसाइष्टकर्णेनहृताः ततस्तेपरेणापिहृताः लब्धंअपमःक्रांतिर्भवेत् ततःततोदलानि शोधयेदित्यादिनायेभुजांशाः तेदिनदलेनगुणिताःनवतिहृताः अथवाइष्टमुन्नतंइष्टोन्नतघटिकाःस्युरित्यर्थः अत्रवि लोमविधिरेववासना अथयंत्रवेधितोन्नतभागेभ्यःकालज्ञानंकथयति॥१७॥अभिमताइष्टायेयंत्रभागाःस्युः ततोयोप मोसौचतुर्विंशतिगुणः ततःपरेणहृत्यल्लबाद्यंफलंतस्माद्येभुजभागाः तेद्युदलगुणाःखनवभिःनवत्याउद्धृताःभक्ताःफलंप्रा

तरणिनवरसाःश्रवोद्धृताःपरविहृताअपमोभवेत्ततः ॥
दिनदलगुणिताभुजांशकानवतिहृताअथवेष्टमुन्नतम् ॥ १७ ॥
अभिमतयंत्रलवास्ततोपमोसौजिननिघ्नःपरहृत्ततोभुजांशाः ॥
द्युदलघ्नाःखनवोद्धृताःकपालेप्राक्पश्चाद्घटिकाःक्रमाद्गतैष्याः ॥ १८ ॥

कपालेगताःपश्चिमेएष्याःदिनशेषाघटिकाःस्युरित्यर्थः अत्रोपपत्तिर्यथा अत्रयंत्रांशानामपमःपराख्यव्यासार्धांतःस्थि तोस्ति धनुःकरणार्थंत्रिज्याव्यासार्धस्थानीयःकार्यः अतोऽनुपातः यदिपराख्येव्यासार्धेअयंयंत्रांशापमस्तदाचतुर्विंश तिमितत्रिज्याव्यासार्धेकः अतोजिननिघ्नःपरहृदिति ततोधनुःकरणार्थंभुजांशाइतिघटीज्ञानार्थमनुपातः यदिनवतिभागै र्द्युदलतुल्याःघटिकाःतदैभिर्भागैःकिमिति अतोद्युदलघ्नाःखनवोद्धृताइति यद्वापरपर्यायदिनार्धशकुनाजिनतुल्योन्नतघ

टिज्यालभ्यते तदेष्टयंत्रापमसमेष्टशंकुनाकिमिति इष्टोन्नतनाडीजन्यभागज्याभवति तच्चापमिष्टोन्नतनाडीजन्यभागाः ततोघटीज्ञानंतुद्युदलानुपातेनेतिसर्वमवदातं अथोन्नतघटिभ्योविलोमेनयंत्रभागान्कथयति ॥ १८ ॥ खांकैर्नवत्याहन्यंतेगुण्यंतेएवंभूताःयाःउन्नतघटिकास्तादिनार्धेनभक्ताःसंत्योभागाःस्युः तेभ्योभागेभ्योयेअपमजांशकाःक्रांत्यंशाःस्युस्तेपरेणगुण्याः ततःसिद्धैश्चतुर्विंशत्याआप्ताःभक्ताःलब्धंयत्ततःनिगदितवत्येभुजांशाःस्युस्तेतस्मिन्कालेयंत्रजाःउन्न

खाङ्कघ्नोन्नतघटिकादिनार्धभक्ताभागाःस्युस्तदपमजांशकाःपरघ्नाः ॥
सिद्धाप्तानिगदितवत्ततोभुजांशास्तत्कालेस्युरितिचयंत्रजोन्नतांशाः ॥१९॥
यंत्रलवोत्थक्रांतिलवाप्तावस्विभदस्राः २८८ स्यादिहकर्णः ॥
कर्णहतास्तेस्यादपमोतोबाहुलवाःस्युर्यंत्रलवावा ॥ २० ॥

ताःअंशाःभागाःस्युरित्यर्थः अत्रोपपत्तिःपूर्वोक्तवैपरीत्येनसुगमा ॥ १९ ॥ अथयंत्रांशेभ्यःइष्टकर्णसाधनमिष्टकर्णाधंत्रांशसाधनमेकवृत्तेनाह यंत्रलवेभ्यःउत्थाःउत्पन्नाःयेक्रांतिभागास्तैःआप्ताःभक्ताः वस्विभदस्राइहेष्टकर्णःस्यात् अत्रोपपत्तिः परमक्रांतिभागाः२४परमाल्पेनद्वादशतुल्येनेष्टकर्णेनगुणिताः जातोभाज्यः २८८ सभाज्यःपरमक्रांत्यायावत्भज्यते तावत्परमाल्पेष्टकर्णोभवति एवमिष्टयंत्रभागाक्रांत्याभाज्यमानेइष्टकर्णोभवत्येवेति अथकर्णेनहतावस्विभदस्राअपमःक्रांतिःस्यात् अतोस्याःक्रांतेर्बाहुभागाः तेवाप्रकारांतरेणयंत्रभागाःस्युरित्यर्थः अत्रव्यस्तविधिरेव

वासना ॥२०॥ अथसर्वत्रनलिकाबंधादिकुंडमंडपादिविधौचदिक्साधनोपयोगोस्त्यतोदिक्साधनंकथयति जलवत्समी
कृतायांभूमौवृत्तेभीष्टकर्कटेनकृतेसतिकेंद्रस्थितस्यवृत्तमध्यस्थस्यशंकोर्धादशांगुलस्यच्छायाग्रंक्रमशोविशति इहापराप
श्चिमदिक्स्यात् यत्रापैतिदिनशेषकालेवृत्ताद्यत्रबहिर्गच्छति तत्रचिह्नेपूर्वदिक्ताभ्यांपश्चिमपूर्वदिग्भ्यांसिद्धोयःतिमिर्म
त्स्यःतस्मान्मत्स्यमुखपुच्छसूत्रात्उत्तरायाम्यादक्षिणास्यात् एवंयद्दिनेत्रिंशन्मितमेवदिनमानंतद्दिवसएवामुनाप्रकारेण
दिक्साधनमन्यथातुभुजंविनादिक्साधनंनभवति अत्रोपपत्तिः अत्रदिशस्तुप्रतिदेशंभिन्नानतुप्रतिकालंतासांभिन्नत्वेहे

वृत्तेसमभूगतेतुकेंद्रस्थितशंकोःक्रमशोविशत्यपैति ॥
छायाग्रमिहापराचपूर्वाताभ्यांसिद्धतिमिरुदक्चयाम्या ॥ २१ ॥

तुरुच्यते यस्मिन्स्थानेसूर्योस्ति तदृजुमार्गोहिपूर्वापरा तत्साधनोपायोयथा मध्यसूत्रोदयास्तसूत्रयोर्यदंतरंज्यारूपंसाअ
ग्रा ततःअग्रात्शंकुमूलपर्यंतंयदंतरंतत्शंकुतलं एवमग्राशंकुतलयोर्योगांतरंभुजःसभुजोमध्यसूत्राद्यथादिशिदेयः सावै
याम्योत्तरादिक्तस्मात्स्यात्पूर्वापरेति अत्रनाडिकामंडलस्थोग्रहोयद्दिवसएवदिनेभवतितद्दिवसएवदिक्साधनंयुक्तम
स्ति अतोत्रनाडिकामंडलस्थेग्रहेचरज्याक्रांतिज्याग्राणामभावः अग्राभावात्शंकुतलतुल्यएवभुजः समध्यसूत्राद्देयइति
यत्रच्छायाप्रवेशनिर्गमस्थानंतत्रैवभवति यतोहिलघुक्षेत्रेशंकुतलंपलभातुल्यं तद्यथाद्वादशकोटौपलभाभुजस्तदाशंकुको
टौकइति जातंशंकुतलंतन्महाशंकुस्थानीयंलघुनिच्छायाक्षेत्रेद्वादशतुल्यैवकोटिः तन्नत्यकरणायानुपातः महाशंकुकोटा

विदंशंकुतलंतदाद्वादशकोटौकिमिति एवंशंकुतुल्ययोर्द्वादशतुल्ययोर्गुणहरयोर्नाशेजातापलभैव अतोहिच्छायाप्रवेश
निर्गमस्थानेपूर्वापरेतन्मत्स्याद्दक्षिणोत्तरेइतिशोभनमुक्तम् ॥२१॥ अथनाडिकामंडलादन्यत्रयस्मिन्कस्मिंश्चिद्दिवसेदि
क्साधनार्थंभुजमानयति वाशब्दःप्रकारांतरसूची अर्कस्ययेक्रांतिलवास्तेषामक्षकर्णस्यचयानिहतिःपरस्परगुणनं साभा
कर्णेनच्छायाकर्णेनकर्णःस्यात् पदमर्कभाक्तियुतेरितिसाधितेननिघ्नीगुणितातातोनभोक्षाग्निभिः३५०पंचाशदधिकशत
त्रयेणआताभक्तासतीरविदिक्सूर्योयस्मिन्गोलेवर्ततेतद्दिक्भुजःस्यात् सभुजोमध्यमःयमदिशादशिणदिशयाद्विघ्न

वार्कक्रांतिसवाक्षकर्णनिहतिर्भाकर्णनिघ्नीनभोक्षाप्त्याप्तारविदिग्भुजोयमदि
शाद्विघ्नाक्षभासंस्कृतः ॥ केंद्रेभोत्थवृतौसपूर्णगुणवद्भाग्रात्प्रदेयोभवेद्याम्योदक्सभु
जार्धकेंद्रनिहितारज्जुस्तुपूर्वापरा ॥ २२ ॥

याद्विगुणयाक्षभयासंस्कृतःसन्स्फुटोभवति सभुजःकेंद्रेभोत्थवृत्तौछायोत्पादितवृत्तेभाग्रात्छायाग्रात्प्रवेशकालीनात्
वानिर्गमकालीनात्पूर्णगुणवत्यथासंपूर्णज्यादीयतेतद्वद्देयः भाग्राद्दीयमानभुजमितशलाकयाअग्रंयथावृत्तपरिधौ
लगतितथादेयमित्यर्थः सायाम्योत्तराभवति भुजार्धभुजमध्यः केंद्रंवृत्तमध्यं अनयोर्मध्येमिलितायारज्जुःसापूर्वा
परा अत्रोपपत्तिः अत्रभुजलक्षणंतुपूर्वमेवप्रतिपादितं तत्साधनंयथा तत्रादावग्रासाध्यते कुज्याभुजःक्रांतिज्याकोटिः
अग्राकर्णइतित्र्यस्रक्षेत्रंतथाचपलभाभुजःद्वादशकोटिःपलकर्णःकर्णइतिअस्मात्साध्यते तत्रानुपातः यदिद्वादशकोटौ

पलकर्णः तदाक्रांतिज्याकोटौकःकर्णइति अग्रास्यात् क्रांतिःकिंचिदधिकेनद्वयेनगुणिताक्रांतिज्यासापलकर्णगु
णाद्वादशभक्ताअग्रासात्रिज्याव्यासार्धे ततोनुपातः यदित्रिज्यावृत्तेइयंअग्रातदाछायाकर्णवृत्तेका अतःछायाक
र्णोगुणःत्रिज्याहरः तत्इयमग्राद्विगुणाकार्या यतःसंपूर्णजीवावत्वृत्तमध्येभुजोदेयोस्ति एवंक्रांतिःपलकर्णगुणा
कार्या ततःसिद्धोगुणद्वयघातोगुणः ४।४ हरघातोहरः १४४० गुणहरौगुणेनापवर्तितौ लब्धाःहरस्थाने ३५०
अतउक्तकर्मक्रांतिलवाक्षकर्णनिहतिरितिसाग्राशंकुतलेनसंस्कार्या तत्रलघुक्षेत्रेशंकुतलंपलभातुल्यं तदग्रायांसंस्कार्यं

घुमानखगुणांतरंशिवगुणंदिनेल्पाधिकेह्यपागुदगथानुदग्भवतियत्रभागापमः ॥
वसुघ्न्युभयसंस्कृतिर्नवतियंत्रभागांतरोद्भवापमहृताततोभुजलवादिगंशाःस्मृताः ॥२३॥

अग्रयाद्विगुणितत्वात् इदमपिद्विगुणंकार्यं अतउक्तं यमदिशाद्विघ्नाक्षभासंस्कृतइति सभुजःभाग्राद्दत्तोयाम्योदक्
स्यात् भुजस्यद्विगुणत्वात् भुजमध्यकेंद्रोपरिनीयमानारज्जुःपूर्वापरेत्यर्थतएवसिद्धम् ॥ २२ ॥ अथतुरीययंत्रात्दिक्
साधनार्थंदिगंशान्साधयति घुमानंप्रसिद्धं खगुणाःत्रिंशत् अनयोर्यदंतरंतत्शिवगुणमेकादशगुणितंतद्दिनेअल्पाधिके
अपाक्उदक्स्यात् त्रिंशदल्पेदिनमानेदक्षिणं अधिकेसतिउत्तरंफलंस्यात् अथशब्दोनंतरवाची यंत्रभागानांअपमः
क्रांतिःसदाअनुदक्दक्षिणेतिउभयोर्द्वयोःसंस्कृतिःवसुघ्नीअष्टगुणासती ततोनवतियंत्रभागानांचयदंतरंतदुद्भवःतस्मा
दुत्पन्नःयःअपमःतेनसाहृता ततःफलात्येभुजलवाःतेदिशांअंशाः दिक्साधनार्थमेतेंशाःस्युरित्यर्थः येतेदिगंशाःयंत्रो

त्पन्नाःएवेति अत्रोपपत्तिः अत्रस्वक्षितिजेचक्रांशाःअंक्याः ततःपूर्वस्वस्तिकेष्टदिक्‌विवरेयेभागाःतेदिगंशास्तज्ज्यादिग्‌
ज्या एवंपश्चिमस्वस्तिकेपि तत्साधनंयथा अग्राकर्णवृत्तीयाकार्या सापलभयासंस्कार्यासभुजःस्यात् ततःसत्रिज्या
वृत्तीयःकार्यः सादिग्‌ज्याभवति तत्रादावग्रासाध्यते द्युमानखगुणांतरंदलितंचरघटिकाः ततःषष्टिगुणाःपलानि
ततस्तच्चरंनवगुणंपलभाभक्तंअष्टभक्तंक्रांत्यंशाइतियुक्तिःपूर्वमुक्तास्ति एवंद्युमानखगुणांतरस्यसिद्धौगुणघातोगुणः
२७० अष्टौपलभाचहरःसाक्रांतिच्छायाकर्णगुणापलकर्णगुणाखखाद्रिभक्ताभुजोभवतिइत्यग्रेवक्ष्यति सभुजःत्रि
ज्ययागुण्यः छाययाभक्तः दिग्‌ज्याभवति एवमत्रच्छायाकर्णपलकर्णावपिगुणौखखाद्रीनामष्टानांचघातोहरः५६००
चतुर्विंशतिमितत्रिज्यागुणघातगुणाज्याघातोगुणः ६४८० अत्रच्छायाकर्णच्छायेसाध्ये यदिशंकुकोटौत्रिज्याकर्णः
तदाद्वादशकोटौकःकर्णइति तथाचदृग्‌ज्याभुजोयदिशंकुकोटौतदाद्वादशकोटौकइति जाताछाया एवमत्रच्छा
ययाभज्यमानेछायाकर्णेनगुण्यमानेछेदांशविपर्यासेशंकुतुल्ययोस्तथाद्वादशतुल्ययोर्गुणहरयोर्नाशेकृतेपूर्वत्रिज्यागुणो
नतांशज्याहरः अत्रपलकर्णोगुणःपलभाहरोस्ति अत्रपलभाचतुर्मिताकल्पितास्वल्पांतरत्वात् त्रिपंचपलभाया
मपिस्यात् अन्यत्रग्रंथसंचारासंभवः लाघवेनयुक्तिदर्शनार्थंस्थूलमंगीकृतमतोनदोषाय एवंचतुर्मितायांपलभायां
पलकर्णः १२।३९ अयंपलभयासषडंशत्रय ३।१० गुणितयातुल्योभवति ततःपलकर्णपलभयोर्गुणहरयोःना
शेतस्यसषडंशत्रयंगुणः ३।१० एवंसषडंशत्रयचतुर्विंशतिमितत्रिज्याघातेन ७६ गुणितःपूर्वगुणघातोगुणः ४९।
२४।८० अयंहरः ५६०० गुणहरौहरेणापवर्त्यजातोगुणः ८८ अतोत्रद्युमानखगुणांतरंगुणेनानेनगुण्यं नतां

शापमेनभाज्यं एवमत्रद्युमानखगुणांतरंशिवगुणितंकृतं अष्टगुणस्यत्यागः यतोग्रिमफलस्यशंकुतलाख्यस्यचअष्टौगु
णोस्तिनतांशापमएवहरः अतःफलसंस्कारएवाष्टगुणोनतांशापमभक्तइतिवदिष्यति तद्यथा अत्रास्यामग्रायांशंकुतल
मपित्रिज्यागुणितंछाययाभक्तंसंस्कार्यंदिग्ज्यास्यात् तत्रशंकुतलंपलभा ४ छायाभाज्यमित्यत्रापिछायासाध्या शं
कुकोटौदिग्ज्याभुजःद्वादशकोटौकइति जाताछाया अनयाभज्यमानेछेदांशविपर्यासेदिग्ज्याद्वादशचहरःशंकोःपल
भाचतुर्विंशतिमितत्रिज्याचगुणः अतोगुणघातोगुणः ९६ गुणहरयोर्गुणेनापवर्तितयोर्जातोगुणः ८ नतांशापमोहरः

समभुविनिहितेतुरीययंत्रेस्पृशतियथाचदिगंशकाग्रकेंद्रे ॥
अवलंबविभोत्थकेंद्रसंस्थेषीकाभाथदिशोत्रयंत्रगाःस्युः ॥ २४ ॥

इदंफलंसदादक्षिणं पलभायाःदक्षिणत्वात् अतोत्रयंत्रांशापमएवद्युमानखगुणांतरेणसंस्कृतः यतस्तस्यापितौगुणहरौ
वर्तेते अतःफलसंस्कृतिरेवाऽष्टभिर्गुण्यानतांशापमेनभाज्येत्युपपन्नं यंत्रांशहीननवत्यंशापमएवनतांशापमइतिप्रत्यक्षं
सिद्धं अत्रपूर्वफलस्याग्रासंज्ञस्योत्तरदक्षिणोपपत्तिर्यथा दक्षिणगोलेऽग्रादक्षिणातद्दिनंत्रिंशदल्पंतथोत्तरगोलेउत्तरा
ग्रातत्रदिनंत्रिंशदधिकं अतोदिनेल्पाधिकेइतिअपागुदगित्युपपन्नं एवमत्रोत्पन्नादिग्ज्यातस्याःधनुःदिगंशाःस्युरतो
हिततोभुजलवादिगंशाइत्युक्तं अथतैर्दिगंशैःयंत्रात्कथंदिक्साधनंभवतितदाह ॥ २३ ॥ जलवत्समीकृतायांभूमौतुरी
ययंत्रेनिहितेसतिस्थापितेसतिदिगंशाःयावंतःस्युस्तदग्रचिह्नमेवकेंद्रं तस्मिन्अवलंबकस्यविभाछायातदुत्थकेंद्रसंस्था

याः ईषिकायाः छायायथास्पृशति तथायंत्रेसाधितेसतितुरीययंत्रदिगंशकाग्रकेंद्रोपरियारज्जुःसापूर्वापरातन्मत्स्याद्या
म्योत्तरेभवतः अतउक्तंयंत्रगादिशःस्युरिति ॥ २४ ॥ अथनलिकाबंधनार्थंभुजसाधनमाह यस्यग्रहस्यनलिकाबंधः
क्रियते तस्यक्रांतिःस्वशरेणसंस्कृतासतीस्पष्टाकार्या साक्रांतिःइष्टकर्णेनगुण्या रात्रौयासुघटीषुनलिकाबंधःक्रियते
तद्घटीभ्योछायेष्टकर्णयंत्रभागग्रहद्युगतादिसाध्यं तत्साधनंआचार्येणाग्रेप्रोक्तमस्ति ततःसेष्टकर्णगुणाक्रांतिःअक्षकर्ण

क्रांतिःस्फुटाभिमतकर्णगुणाक्षकर्णनिघ्नीखखाद्रि ७०० हृदपक्रमदिग्भुजःस्यात् ॥
संस्कारितोयमदिशाक्षभयास्फुटोसौतद्वर्गभाकृतिवियोगपदंचकोटिः ॥ २५ ॥

गुणासतीखखाद्रिहृत् अपक्रमदिक्स्पष्टक्रांतेर्यादिक् तद्दिग्भुजोभवतिसमध्यमः यमदिशादक्षिणदिशा अक्षभयाअसौ
संस्कृतःस्फुटःस्यात् तस्यभुजस्ययःवर्गःभायाश्छायायाःयःवर्गःतयोर्वियोगःअंतरंतस्यपदंमूलंकोटिःस्यात् अत्रभुजस्यो
पपत्तिःपूर्वमेवप्रतिपादितास्ति तत्रद्विगुणःकृतोस्तिअत्रैकगुण्योतःहरोद्विगुणःपठितःएकगुण्यापलभयासंस्कार्यः अथको
टेरुपपत्तिः दक्षिणोत्तरोभुजः छायैवकर्णः यतोहिभुजःछायावृत्तस्थः अतोदोःकर्णवर्गयोर्विवरान्मूलंकोटिरिति ॥ २५ ॥

अथभुजकोटिकर्णनलिकासंस्थानमाह आशाःदिशःज्ञात्वापूर्वोक्तवज्जलसमीकृतभूमौदिक्साधनंकृत्वा तत्रेष्टकालीन च्छायाव्यासार्धेनवृत्तंकृत्वा तत्रदिक्चिह्नानिकार्याणि ततोबिंदोःवृत्तमध्यात्परखेचरेखमध्यात् पश्चिमकपालस्थेग्रहेप रमुखींपश्चिमाभिमुखींकोटिंयथागतांदद्यात् प्राक्खेचरेपूर्वकपालस्थेग्रहेप्राङ्मुखींकोटिंबिंदोरेवदद्यात् अतःकोटयं तात्स्वदिशिभुजंदद्यात् छायांविन्यसेत् केंद्रादारभ्यभुजांताग्रपर्यंतंछायाप्रसार्यासैवकर्णः एवंजातेत्र्यस्त्रंक्षेत्रं अथनलि कानिवेशमाह बिंदोरिति बिंदोर्वृत्तमध्याद्भाग्रेगच्छतिसतथा एवंभूतोयःशंकुःभुजांतच्छायांतसंयोगेद्वादशांगुलःशं

ज्ञात्वाशाःपरखेचरेपरमुखींप्राक्खेचरेप्राङ्मुखींबिंदोःकोटिमितोभुजंस्वदिशित
न्मध्येप्रभांविन्यसेत् ॥ बिंदोर्भाग्रगशंकुमस्तकगतेसूत्रेनलेखेखगं केबिन्दुस्थन
राग्रभाग्रगगतेसूत्रेनलेलोकयेत् ॥ २६ ॥

कुःस्थाप्यः तथाकेंद्रेकीलकंटकादिबद्धंसूत्रंभूलग्नंकृत्वा तत्सूत्रंतच्छंकोर्मस्तकोपरिनीत्वा तेनैवऋजुमार्गेणाग्राद्दूर्ध्वं नयेत् तत्रसूत्रेनलोनिवेश्यः तस्यद्वौवंशौआधारभूतौकार्यौ नलोनामांतःससुषिरंवंशतालं तस्मिन्नलेयत्कालीनंभुजा दिकृतंतदघटोपुमूलमभ्यस्थंदृष्ट्वा खेआकाशेखगंग्रहंविलोकयेत् एवंविलोक्यमानेतस्मिन्नलमध्येसचेत्ग्रहोनावलो क्यते तदासग्रहोनघटते तत्रांतरमपिलक्ष्यं एवमनयैवयुक्त्याआचार्येणसर्वग्रहाणांनलिकाबंधंविधाय अंतराणिज्ञा त्वाग्रहसाधनंकृतं अथजलेग्रहदर्शनार्थंनलिकानिवेशमाह कइति उदकेग्रहंविलोकयेत् तद्यथा अत्रशंकुःकेंद्रेस्थाप्यः तच्छंकग्रात्सूत्रंभाग्रपर्यंतमधोनयेत् ततःसूत्रेनलःस्थाप्यः ततश्छायाग्रस्थानेजलपूर्णपात्रंस्थाप्यं तत्रमध्येधोदृष्ट्याजले

ग्रहोविलोक्यः अत्रेदंसर्वंदिक्साधननलिकानिवेशादिकृत्वाततस्तस्मिन्नेवकालेविलोक्यमिति उक्तंचसिद्धांतशिरोमणौ " दर्शयेद्दिविचरंदिविकेवानेहसिद्युचरदर्शनयोग्ये ॥ पूर्वमेवविरचय्ययथोक्तंरंजनायसुजनस्यनृपस्य॥ " अस्योपपत्तिःप्रत्यक्षसिद्धार्थतएवज्ञायते इदंदिक्साधननलिकाबंधादिनान्यकरणेष्वस्ति आचार्येणराज्ञांचमत्कारदर्शनार्थं स्वकृतग्रहघटनार्थंकृतमिति ॥ २६ ॥ दैवज्ञवर्यस्यदिवाकरस्यसुतेनमल्लारिसमाह्वयेन ॥ वृत्तौकृतायांग्रहलाघवेपिभ्रश्चाधिकारःपरिपूर्तिमागात् ॥ ॥ इतिश्रीमद्गणेशदैवज्ञकृतग्रहलाघवस्यटीकायांमल्लारिदैवज्ञविरचितायांलग्नादिच्छायापंत्रभागदिक्साधननलिकाबंधाधिकारश्चतुर्थः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥

॥ गतगम्यदिनाहतद्युभक्तेःखरसाप्तांशवियुग्युतोग्रहःस्यात् ॥
तत्कालभवस्तथाघटिघ्न्याःस्वरसैर्लब्धकलोनसंयुतःस्यात् ॥ १ ॥

अथचंद्रग्रहणाधिकारोव्याख्यायते तत्रेदंचिंत्यते ननुकिन्नामग्रहणं गृह्यतेनेनेतिग्रहणं यःयंग्रहीतुमिच्छतिसतंप्रतियदागच्छेत्तदैवग्रहणं अतोग्राह्यग्राहकयोर्योगोग्रहणं योगोनामांतराभावः अतोग्राह्यग्राहकयोरंतराभावोग्रहणमिति अस्तिग्रहाणांगतिःषोढापूर्वापरायाम्योत्तरोर्ध्वाधराचेति तत्रकिंपूर्वापरयाम्योत्तरोर्ध्वाधरांतराणामभावोग्रहणं किंवापूर्वापरयाम्योत्तरांतराभावोग्रहणं किंवापूर्वापरोर्ध्वाधरांतराभावोग्रहणं किंवापूर्वापरांतराभावोग्रहणं उत्तरयाम्योत्तरांतराभावोग्रहणं किमुतऊर्ध्वाधराभावोग्रहणं अत्रोच्यते ग्रहकक्षयोर्महदंतरस्यविद्यमानत्वात्ग्राह्य

ग्राहकयोरूर्ध्वाधरांतराभावःकल्पांतेपिनस्यात् अतःप्रथमतृतीयषष्ठाःपक्षानसुंदराः अथवक्तव्यंपूर्वापरयाम्योत्तरां
तराभावोग्रहणमिति तदपिसंज्ञानघटते यतोहिविद्यमानेशरतुल्येदक्षिणोत्तरांतरेग्रहणंभवत्येव अनेनहेतुनाद्वितीयपं
चमपक्षौनशोभनौ अथवक्तव्यंपूर्वापरांतराभावोग्रहणं तत्रप्रतिपर्वणिग्राह्यग्राहकयोःपूर्वापरांतराभावोस्त्येव नप्रति
पर्वणिग्रहणंभवति अथनापिचतुर्थःपक्षःशोभनः तत्रकिंनामग्रहणमितिमंदमतयोत्रमुह्यंति अत्रोच्यते पूर्वापरांतराभा
वेमानैक्यखंडादूनेशरेग्रहणं मानैक्यखंडतुल्येशरेबिंबप्रांतयोःसंयोगमात्रंभवति यथायथामानैक्यखंडाच्छरोन्यूनोभव
ति तथातथाग्राह्यबिंबंग्राहकबिंबेप्रविशति तावानेवग्रासः एवंसत्यपिऊर्ध्वाधरांतरेग्रहणं तत्रहेतुःअस्मदादिदृष्टेरावर
णीभूतत्वंतावत्ग्रहणकर्तृत्वं नतुग्राह्यग्राहकयोःबिंबसंयोगः अहोआस्तांतावदनेनविचारेण यतःप्रथमंसूर्यचंद्रयोःग्रा
ह्यग्राहकयोःकोवाग्राहकइतिनज्ञायते अत्रोच्यते अत्रसूर्यचंद्रग्रहणेराहुरेवकारणीभूतः यतोराहुर्नामपातः पातवशा
च्छरः शरवशादेवग्रहणं अतोऽवश्यंग्रहणेराहुर्हेतुभूतः अत्रग्रहणे “कमलासनानुभावाद्राहुग्रस्तेदिवाकरेनिशाकरेचे”
तिस्मृतिवाक्यपर्यालोचनेनचराहुरेवसूर्यचंद्रग्रहेग्राहकइतिपूर्वःपक्षः अत्रवयंतुब्रूमः ननुराहोर्ग्रहणकर्तृत्वेप्रोच्यमानेराहु
णासूर्यचंद्रतुल्येनभवितव्यंयतःपूर्वापरांतराभावंविनाग्रहणंवक्तुंनशक्यते नात्रग्रहणेराहुणासहपूर्वापरांतराभावोदृश्यते
नातोग्रहणेराहोर्ग्राहकत्वमितिसिद्धांतः ननुपूर्वपक्षीत्याशंकते अहोभवद्भिःग्रहणेग्राह्यग्राहकयोःपूर्वापरांतराभाव
एवोच्यते तदयुक्तं यथाग्रहाणामस्तेभवंतःकालांशांतरितेसूर्यात्ग्रहेसतिग्रहास्तादिरितिमन्यंते तथैवास्माभिःसप्तभि
र्द्वादशभिःकालांशैःसूर्यचंद्राभ्यांयथाक्रममंतरितेराहौग्रहणादिबिंबसंयोगमात्रंमन्यते कालांशांतराभावेपरमंग्रहणं

यथासूर्यग्रहांतराभावेपरमास्तमयउच्यते एतेकालांशाःराहुवशेनैवमानैक्यखंडतुल्यशराद्युत्पन्नाःयुक्तियुक्ताएवसंति
अतोराहुणाग्राहकेणकालांशांतरितेनसूर्यचंद्रौग्रस्येते इतियुक्तिःकथंभवच्चेतोनसहते एवंचित्तदाअस्तेपिसूर्यग्रहयोः
पूर्वापरांतराभाववमेववदंतुभवंतः नकालांशांतरेचेत्तत्रकालांशांतरमंगीक्रियतेतर्हिकिमनेनापराद्धमिति ग्रहेप्रतिबंध
राहुरेवग्रहणेकारणमितियुक्तं सत्यं अहोभवतुराहुर्ग्रहणेकारणंपरंतस्यराहोर्ग्राहकस्यबिंबसिद्धिःकर्तव्या तद्बिंबंगगने
नावलोक्यते अत्रतुऋजुत्रिज्यामितशलाकाभ्यांबिंबप्रांतौवेध्यौ तन्मध्येयाःकलाःताःबिंबकलाः अनयैवयुक्त्यासर्वेषां
बिंबानिसाधितानि अनेनविधिनान्यप्रकारेणराहोर्बिंबंज्ञातुंनैवशक्यते अदर्शनादेव अतःसतिकुड्येचित्रमिति
न्यायात्राहोर्ग्राहकत्वंनैवभवतीतिसिद्धांतः अत्रोच्यते अहोभवद्भिःराहुबिंबसाधनोपायादर्शनात्नतस्यग्राहकत्वमुच्य
ते तत्रबिंबंसाध्यते तद्यथा राहुश्चंद्रकक्षायांक्रांतिमंडलविमंडलसंपातेस्ति तत्रसूर्यग्रहणेसूर्यचंद्रौसमकलौ सूर्यात्सप्ताल्पे
ष्टकालांशांतरएवराहुःसपुच्छादियुतःपक्षाकारोवर्तते तस्यमुखंतुक्रांतिमंडलविमंडलसंपातेनास्त्येव "अमृतास्वादवे
लायांछिन्नश्चक्रेणविष्णुने"तिस्मृतिवाक्यबलेनराहुमुखंसंपातात्कालांशांतरितमस्तीतिकल्पनीयमेव यतोयदाकाशे
दृश्यते तदेवगणितेनसिध्यतीतिराहुमुखाभावात्राहुमुखस्थानाज्ञानात्तस्यमुखहीनशरीरस्यसंपातसंज्ञंस्थानमंगीकृतं
ततस्तत्संपातान्कालांशांतरेराहुशीर्षसंपातात्कालांशांतरेचंद्रश्चसूर्यश्चंद्रतुल्यः अतःसूर्यस्यग्राह्यस्यराहुणाग्राहकेणस
हपूर्वापरांतराभावोप्यस्ति राहुशीर्षंतुचंद्रबिंबोपरितत्समानमेवएककक्षत्वात्तत्तुल्यत्वाच्चयच्चंद्रबिंबंश्यामंतदेवसूर्यग्रह
णेसूर्यस्यावरणीभूतं तथाचंद्रग्रहणेचंद्रःषड्भांतरेसूर्यात्भूछायापिषड्भांतरेण चंद्रभूछायेसमानेचंद्रात्वृत्तसंपातः इष्ट

कालांशांतरेसंपातात्राहुशीर्षमपिकालांशांतरे अतःराहुशीर्षंभूछायातुल्यं अतएवचंद्रकक्षायांयावतीभूछायावि
स्तृतिः तावदेवराहुबिंबं अतश्चंद्रग्रहणेपिराहुबिंबंभूभातुल्यंचंद्रस्यावरणीभूतं तयोःपूर्वापरांतराभावोप्यस्ति अतो
बिंबसिद्धिरपिवर्ततइतियुक्तिबलात्आगमप्रामाण्याच्चराहुरेवावश्यंग्रहणद्वयेपिकारणीभूतोवक्तव्यइतिसिद्धं ननुसूर्य
ग्रहणेचंद्रबिंबतुल्यंराहुबिंबंभवद्भिरुच्यते चंद्रग्रहणेभूछायातुल्यंराहुबिंबंइदंनघटते यतःएककक्षास्थितस्यराहोर्बिं
बंकथंमहांतरितं चंद्रबिंबात्भूछायातुत्रिगुणितासन्नादूरस्थेगृहेबिंबं लघुगतिश्चलघ्वी समीपस्थेगृहेबिंबं पृथुगतिश्चपृथ्वी
तत्रराहोर्गतिःसदासमैव अतोबिंबलघुमहत्त्वंनस्यादेव अथवक्तव्यं चंद्रकक्षायांराहुः यथाचंद्रस्योर्ध्वाधरगमनेनबिंब
लघुमहत्त्वं तथैवराहोरिति तदप्ययुक्तं यतःचंद्रबिंबोर्ध्वाधरगमनवशेनैवयदास्याबिंबोनाधिक्यंस्यात्तदासर्वदासूर्यचंद्र
ग्रहणेपिचंद्रबिंबतुल्यमेवराहुबिंबंनोनाधिकंस्यात् कथंचंद्रग्रहणेभूछायातुल्यंराहुबिंबमुच्यते अतस्तदसत् यदिग्रह
णद्वयेपिचंद्रबिंबतुल्यमेवराहुबिंबंवक्तव्यं तदाचंद्रग्रहणेस्थितिर्महती सूर्यग्रहणेस्थितिर्लघ्वी एवंकथंस्यात् स्थितिल
घुमहत्त्वंतुप्रत्यक्षंग्रहणेदृश्यते अतःचंद्रबिंबतुल्यराहुबिंबंसर्वदाकल्प्यमित्येतदप्यसत् अन्यच्चसूर्यग्रहणेर्धग्रासेसूर्यबिंब
शृंगेतीक्ष्णेचंद्रग्रहणेशृंगयोःकुंडलतादृश्यते अतोहिच्छादकःग्रहणद्वयेभिन्नएवकल्प्यः अतोपिराहुर्नच्छादकः पूर्वंभव
द्भिःकालांशांतरेअस्तप्रतिबंधाग्रहमितियदुक्तंतदप्यसत् यतःसूर्येणस्वतेजसाकालांशांतरेपिग्रहोनिष्प्रभःक्रियते अत
स्तत्रैवतस्यास्तइतियुक्तं अत्रराहुःअंधकाररूपः अंधकारोनामतेजोहानिः तेजोहान्याकालांशांतरेणसूर्यचंद्रावाच्छाद्ये
ते इदंसर्वथाल्पसंबंधं एवंसतिगणितयुक्तिबलेनप्रत्यक्षदर्शनतयाचराहोर्ग्रहणेग्राहकत्वंनसंभवत्येवेतिसिद्धांतः नन्वेवं

चेत्तर्हिवेदाप्रामाण्यप्रसंगःस्यात् अत्रोच्यते सूर्यग्रहणेचंद्रश्छादकः चंद्रग्रहणेभूछायाछादिनी तत्राप्रमायांचंद्रबिंबंश्यामं
राहुबिंबमपिश्यामं यद्यपितत्रनकालांशांतरेवृत्तसंपातेस्ति तथापिब्रह्मवरदानात् ग्रहणकालेतत्रगच्छतीतिकल्प्यते एवं
चंद्रग्रहणेपिभूछायाश्यामली राहुबिंबमपितथा यद्यपितत्तत्रनास्ति कालांशांतरेकृतसंपातेस्ति तथापिवरवशात्ग्रहणेभू
छायांतर्वर्तीराहुर्भवतीतिकल्प्यते आगमभयात् उक्तंचभास्कराचार्यैःसिद्धांतशिरोमणौ ‘ दिग्देशकालावरणादिभेदैर्न
च्छादकोराहुरितिब्रुवंति॥ यन्मानिनःकेवलगोलविद्यास्तत्संहितावेदपुराणबाह्यम्॥ १ ॥राहुःकुभामंडलगःशशांकंशशां
कगश्छादयतीनबिंबम् ॥ तमोमयःशंभुवरप्रदानात्सर्वागमानामविरुद्धमेतत्॥२॥’एवमत्रमुख्यतयासूर्यस्यचंद्रश्छादकः
चंद्रस्यभूछायाछादिनीतिसिद्धं अहोभवद्भीराहोर्ग्रहणकर्तृत्वंकृतंचेत्तदासूर्यग्रहणेसूर्यबिंबस्यपश्चिमेस्पर्शः चंद्रग्रहणेचंद्र
बिंबस्यपूर्वेस्पर्शः भूमेःछायांप्रविशतिइतिकः अथप्रकृतंग्रहणसाधनंतदर्थंपर्वांतकालीनौचंद्रसूर्यौकार्यौंवराहुरपिकार्यः
यतोराहुंविनाशरसिद्धिर्न अतःपंचांगीयावधिस्थितग्रहाणांतद्दिनजकरणार्थंस्थूलामेवतदवधिस्थितांगतिंतद्दिनांतरेस
मानमेवांगीकृत्यग्रहाणांचालनंवदति सत्स्वल्पांतरंस्यात् अतोनदोषायभवतीति अथवासूर्यचंद्रयोःसूर्योदयिकयोः
पर्वांतकालीनकरणार्थंचालनमाह॥ १ ॥व्याख्यायद्दिनजोग्रहस्तद्दिनात् पूर्वकालीनग्रहसाधनार्थंगतदिनानि अग्र्यका
लीनग्रहसाधनार्थंयावंतिदिनानितावंतिगम्यानि तैर्गतैरथवागम्यदिवसैर्ग्रहस्यद्युभक्तेःदिनगतेःगुणितायाःखेखरसैःष
ष्ट्याआप्तांशाःलब्धभागास्तैःवियुग्युतोग्रहःचेत्पूर्वंक्रियतेतदाहीनः अग्रिमश्चेत्तदायुक्तः सतद्दिनजोग्रहःस्यात् तथा
इष्टघटीघ्न्याःगतेःखरसैर्यालब्धकलाः ताभिर्यथाक्रमंऊनसंयुतःसन्तत्कालभवःग्रहोभवतीत्यर्थः अत्रोपपत्तिः यदिसाव

नाभिःषष्टिघटीभिःगतिकलाःग्रहःपूर्वगत्याक्रामति तदाइष्टघटीभिःकतिकला एवंदिनगुणितायांगतौकलाःस्युः षष्ट्या भाज्याःभागार्थं अतउक्तंगतगम्येत्यादि अतोनुपातः धनर्णोपपत्तिःप्रत्यक्षतोतिसुगमा॥ १ ॥अथग्रहणसंभवासंभवज्ञानार्थंपूर्वसंभूतिंकथयति एवंकृतेसतिसूर्यचंद्रौतुपर्वांतेसमकलौभवतः उक्तंचसिद्धांतशिरोमणौ "पूर्णांतकालेषुसमौलवाद्यैर्दर्शांतकालेवयवैर्गृहाद्यैः" इति ततःपर्वांतकालीनराहूनितस्यसूर्यस्ययोबाहुःभुजः तस्यइंद्राल्पांशाःभुजभागाश्चेत् चतुर्दशाल्पाः तदैवग्रहस्यग्रहणस्यसंभवःस्यादधिकेपुनैव ततस्तेंशाःभुजभागाःशंकरैःएकादशभिःनिघ्नाःगुणिताःशै

एवंपर्वांतेविराह्वर्कबाहोरिंद्राल्पांशाःसंभवश्चेद्ग्रहस्य ॥ तेंशानिघ्नाः
शंकरैःशैलभक्ताव्यग्वर्कांशःस्यात्पृषत्कोंऽगुलादिः ॥ २ ॥

लैःसप्तभिर्भक्ताःसंतोद्दिष्टफलंसःअंगुलादिः अंगुलपूर्वकःपृषत्कःशरःव्यग्वर्कांशोभवति राहूनितसूर्योयस्मिन्गोलेतद्दिग्भवतीत्यर्थः अत्रोपपत्तिः अपवृत्तेयद्राशौभागेकलायांचंद्रपातोवर्तते तंतुविलोमंदत्त्वातत्रविमंडलापमंडलयोःसंपातोद्वितीयः षड्भांतरेणद्वयोःसंपातयोःत्रिभेंतरेपरमविक्षेपतुल्यैर्भागैरपवृत्ताद्यंविमण्डलाद्यर्धंउदक्विदध्यात् तथाद्वितीयंदक्षिणेन एवंस्थितेचंद्रपातावपिद्वौ मेषादितःपूर्वगतौप्रवृत्तश्चंद्रःशीघ्रत्वादग्रतोयाति तत्रयदापातसमश्चंद्रोभवति अत्रविक्षेपाभावः अतोविगतराहुश्चंद्रः चंद्रशरार्थंकेंद्रं अत्रतुसूर्यग्रहणेचंद्रसूर्ययोःसमत्वात्राहुणासूर्यएवहीनःकृतः चंद्रग्रहणेपिसूर्यचंद्रयोःषड्भांतरात् विराहुचंद्रविराहुसूर्ययोर्भुजसाम्यमेवपरमत्रगोलान्यत्वात् शरोन्यदिक्सएवपरि

गति द्वि[illegible]१२सांगुलमुखतनुस्यात्खररुचोविधोर्भुक्तीर्वेदाद्रिभि ७४

रपहताबिंबमुदितं न्पाश्चोनाचांद्रि ७१५ गतिरपहृताकौचनकरैः २२रदाठ्या

लेखेप्रयोजकः अतएवाचार्यैणचंद्रग्रहेव्यस्तदिक्शरइतिप्रोक्तं तत्रत्रिभेपरमःशरः अतोनुपातः यदित्रिज्यातुल्यया १२० विराह्वर्कभुजज्ययापरमोनवत्यंगुलतुल्यःशरः ९० तदेष्टदोर्ज्ययाकिमिति अत्रभुजभागाःसप्तमिताःप्रकल्पिताः तेभ्यःसाधितशरः११ ततोनुपातः यदिसप्तभिर्भुजभागैर्भवतुल्यःशरःतदेष्टैःकिमिति अतउक्तं तेंशानिघ्नाःशंकरैः शैलभक्ताइति गोलवशाद्दिग्भवतीत्यर्थतएवसिद्धं अथपूर्वार्धोपपत्तिः मानैक्यखंडाधिकेशरेग्रहणाभावः अतश्चंद्र भूभाबिंबेपरमगतिप्रमाणेनकृत्वा तयोर्योगार्धमानैक्यखंडंकृतं२०।३७ एतावान्शरस्तुचतुर्दशतुल्यभुजभागेभ्यएवभ

व्यसुशरगतीष्वंशोदिग्युग्भवेद्दपुरुष्णगोरथसितरुचोबिंबंभुक्तिर्युगाचलभाजिता ॥
तदपिहिमगोर्बिंबंत्रिघ्नं ३ निजेंशलवान्वितंविवसुभवतिक्ष्माभाबिंबंकिलांगुलपूर्वकम् ॥३॥

वति अतइंद्राल्पांशाःयदातदाग्रहणमित्युपपन्नम्॥२॥अथसूर्यचंद्रभूछायाबिंबानांसाधनंकथयति विगताःअसुशराः पंचपंचाशत्५५ यस्याःसातथा एवंभूतायागतिस्तस्याःइष्वंशःपंचमांशःसदिग्भिःदशभिर्युक्युक्तःकार्यः तत् उष्णगोः सूर्यस्यवपुःबिंबंस्यात् अंगुलपूर्वकमितिसर्वबिंबेषुसंयुज्यते अथसितरुचःचंद्रस्यभुक्तिर्गतिः युगाचलैःचतुःसप्तत्या७४भा जितासतीचंद्रबिंबंस्यात् अथभूछायांसाधयति तदपिहिमगोःचंद्रस्यबिंबंत्रिघ्नंत्रिगुणंततःनिजेनइंशभागेनएकादशांशे नयुक्विवसुअष्टोनंसत् क्ष्मायाःभुवःयाभाछायातस्याःबिंबंभूछायाबिंबं भवतीत्यर्थः अत्रोपपत्तिः उच्चस्थितग्रहस्य बिंबंलघुगतिश्चलघ्वी तथानीचसमस्यग्रहस्यबिंबंपृथुगतिर्महती यथायथागतिर्वर्धतेतथाबिंबमपिवर्धते यथाहीयतेतथाऽ

३२भूभास्यात हृनगतेन गांशेनरहिता३॥

पचीयते अतोगतेर्बिंबानयनंकर्तुंयुज्यते तद्यथा यदिदिनगतियोजनैःगतिकलाः तदाबिंबयोजनैःकिमिति कला दीनिबिंबानिस्युः तानित्रिभक्तान्यंगुलानि यतोत्रांगुलंत्रिकलमेवकल्पितमस्ति अत्राचार्येणलाघवार्थंसूर्यगतिंपंचपंचा शन्मितांप्रकल्प्यसूर्यबिंबमंगुलाद्यंसाधितं सतथादिनगतियोजनानिपादोनगोक्षधृतिभूमितानि ११।८।५९ एभिःपंच पंचाशन्मितायांगतौभाजितायांएभिःसूर्यबिंबयोजनैः६५२२गुणितायांजातंकलाद्यमर्कबिंबं३० इदंत्रिभक्तंजातमंगु लाद्यं १० अथपंचपंचाशदधिकस्यगतेःखंडस्यबिंबंसाध्यं तदत्रयोज्यंबिंबंस्यात् अत्रगत्यर्थंसार्धपंचभागोभवति ग तिखंडस्याल्पत्वात्पंचमांशएवांगीकृतः अतोव्यसुशरगतोष्वंशोदिग्युगित्युपपन्नं एवमेवचंद्रस्यमध्यगतिप्रमाणेनां गुलाद्यंचंद्रबिंबंसाधितं १०।४० चंद्रबिंबयोजनानि ४८० अतोनुपातः यदिमध्यगत्या ७८० इदंचंद्रबिंबंतदा स्पष्टगत्याकिमिति स्पष्टगतेःबिंबंगुणः मध्यगतिर्हरः गुणहरौगुणेनापवर्तितौ हरस्थानेजाताः ७४ अतःसित रुचोबिंबंभुक्तिर्युगाचलभाजितेत्युपपन्नं अथभूछायोपपत्तिः अत्रार्कबिंबंभूव्यासांतरयोजनानांरविकक्षायांकलाक रणार्थमनुपातः यदिदिनगतियोजनैः ११८५९ गतिकलाःलभ्यंते ५९।८ तदार्कबिंबयोजनभूव्यासांतरयोजनैः ४९४१ किमिति अतोलाघवार्थंमध्यगतेरेवानीताःकलाः २४ एतास्त्रिभक्ताः ८ जातानिरविगतिसंबंधीनिअंगुला नि ८ अथभूव्यासस्यचंद्रकक्षायांकलाकरणायानुपातः यदिगतियोजनैः ११८५९ चंद्रगतिकलाःलभ्यंते तदाभू व्यासयोजनैः १५८१ किमिति अंगुलार्थंत्रीणिहरः ३ चंद्रगतेर्गुणः १५८१ हरघातोहरोजातः ३५५७७ गुणह रौसार्धत्रिवेदैरपवर्तितौ ४३३० जातंगुणस्थाने ३६ हरस्थाने ८१७ अत्रखंडगुणनंविहितं प्रथमस्थानेएकादशभि

गुंणहरापवर्तितौ ३७४ अत्रवेदाद्रिभक्ताचंद्रगतिःचंद्रबिंबंभवति अतश्चंद्रबिंबंत्रिगुणंपृथक्स्थाप्यं द्वितीयस्थानीयोह
रःचतुःसप्तत्याभक्तःचंद्रबिंवस्यगृहीतत्वात् अतोजातोद्वितीयहरः ११ गुणकःत्रिमितएवोभयत्र अतएवहिमगोर्विंबं
त्रिघ्नंनिजैशलवान्वितमिति तत्सूर्यगतिसंबंधिभिरंगुलैःस्वल्पांतरैः ८ हीनंकार्यं यतोभूव्यासात्यावद्रविबिंबमधिकंता
वत्प्रमाणेनोपर्युपरिगच्छंत्याभूभायाःविस्तृतिरपचयिनीस्यात् यथापृथुदीर्घेल्पवस्तुनश्छायाअग्रेअपचीयमानासूच्य
ग्राभवति अल्पेदीपेपृथुवस्तुनोग्रेउपचीयमानास्थूलाभवति अतोभूव्यासाद्यावताधिकंतेनभूव्यासोहीनःकृतइति ॥३॥

छादयत्यर्कमिंदुर्विधुंभूमिभाच्छादकच्छाद्यमानैक्यखंडंकुरु ॥
तच्छरोनंभवेच्छन्नमेतद्यदाग्राह्यहीनावशिष्टंतुखच्छन्नकम् ॥ ४ ॥

अथमानैक्यखंडग्रासप्रमाणेसाधयति इंदुःचंद्रःअर्कंछादयतिअस्मदादिदृष्टेरावरणीभूतोभवति भूमिभाविधुंचंद्रमसं
छादयति छादकच्छाद्ययोःसूर्यग्रहणेसूर्यचंद्रयोः चंद्रग्रहणेचंद्रभूछाययोः येमानेबिंबेतयोर्यदैक्यंतस्ययत्खंडंअर्धंतत्
कुरु तन्मानैक्यखंडमिति शरेणपूर्वसाधितेनऊनंरहितंसत्यदवशिष्टंतच्छन्नंअंगुलाद्योग्रासःस्यात् चेन्मानैक्यखंडा
च्छरोननिर्गच्छति तदाग्रहणमपिनास्तीतिज्ञेयं ततश्छन्नंयदाग्राह्येणच्छाद्यबिंबेनहीनंसत्अवशिष्टंतदातुशेषतुल्य
खग्रासोभवति खच्छन्नमितियथार्थंनाम यतःसर्वबिंबंग्रासयित्वाआकाशमपितावद्ग्रसितं इदंतुसर्वग्रहणएवभवति
अस्योपपत्तिः रवेर्भार्धांतरेक्रांतिवृत्तेभूभाभ्रमति रवेर्भार्धांतरेचंद्रश्च अतःपौर्णमास्यंतेभूभाचंद्रौसमौभवतः अत

श्चंद्रस्यभूछायाछादिनीस्यात् दर्शांतेचंद्रादूर्ध्वंरविःसमः अतःरवेश्चंद्रमाश्छादकोभवति अथग्रासोपपत्तिः चंद्र विमंडलापवृत्तयोःसंपातश्चंद्रपातः तथातस्मात्षड्भांतरेपि एवंस्थानद्वयेशराभावः ततस्त्रिभेंतरेपरमःशरः एवंकृतेचंद्र विंबमध्यकेंद्रंविमंडलेसदैववर्तते सूर्यस्यमंडलकेंद्रंक्रांतिमंडलेतस्मात्षड्भांतरेभूछायायाःकेंद्रमपिक्रांतिमंडलएव यदाचंद्र स्यशराभावः तदाचंद्रःक्रांतिवृत्तमाश्रयति एवमुभयोरेकमार्गाश्रितत्वात्मंडलभेदःस्यात् तदाचंद्रमंडलंभूछायांभवि श्यपूर्वतोनिःसृत्यगच्छति तदासर्वग्रहणंभवति स्वल्पेशरेग्रासादिकस्यसंभवः उभयोर्मंडलयोर्योगार्धाधिकेशरेग्रहणाभा

मानैक्यखंडमिषुणासहितंदशघ्नंछन्नाहतंपदमतःस्वरसांशहीनम् ॥
ग्लौबिंबहृत्स्थितिरियंघटिकादिकास्यान्मर्दंतथातनुदलांतरखग्रहाभ्याम् ॥५॥

वः एवमत्रराहोरेवकारणंपरिदृश्यते उक्तंच"दिग्देशकालावरणादिभेदैर्नच्छादक"इति किंतुसंहितादिषुराहुकृतंग्रहण मितिप्रसिद्धिः तत्कारणंलल्लेनोक्तं"ग्रहणेकमलासनानुभावादि"त्यादिच्छाद[illegible]दकयोःमंडलमध्यकेंद्रयोःविमंडलाप मंडलस्थयोर्नेमिस्पर्शउभयोर्धमंडलार्धएवयोगांतरंभवति तावतिशरेमंडलस्पर्शएव तदूनेयावानुभयोःसंयोगस्तावान्ग्रा सइति अधिकेमंडलयोःसंपर्कोनभवत्येव तस्माद्ग्रहणाभावः छाद्यतुल्यंछन्नेपूर्णग्रहणंतस्माच्छाद्योनेछन्नेचाकाशग्रासः खच्छन्नसंज्ञाइति॥४॥ अथग्रहणस्यस्थितिसाधनमाह मानैक्यखंडंइषुणाशरेणसहितं ततोदशभिर्हन्यतेतत्तथा ततश्छ न्नेनग्रासेनआहतंगुणितंपदंमूलं ततस्वषडंशहीनंचंद्रबिंबभक्तंघटिकादिकाःस्थितिःस्यात् तथातनुदलांतरखग्रहाभ्यां

मर्द्धंस्यात् तद्यथा विंबार्धांतरंशरयुक्तंखग्रासगुणं अतोमूलंस्वषडंशहीनंचंद्रविंबभक्तंघटिकादिकंमर्द्धंस्यादित्यर्थः अत्रोप
पत्तिः समायांभुविअभीष्टव्यासार्धेनवृत्तमालिख्यदिगंकंकृत्वा यापूर्वापरावृत्तरेखा ततःस्वदिशिमध्यग्रहणिकंशरंप्रसा
र्यतदग्रेबिंदुःकार्यः ततस्तदग्रसूत्रस्पृक्पूर्वापरायतारेखाकार्या साविमंडलरेखा ततोपवृत्तरेखा मध्येमध्यंकृत्वा भूभांव्या
सार्धेनयद्वृत्तमुत्पद्यतेतद्भूभावृत्तं ततोविक्षेपाग्रेबिंदुंमध्येकृत्वाग्राह्यबिंबार्धेनयद्वृत्तमुत्पद्यतेतच्चंद्रवृत्तं तच्चंद्रभूभावृत्तांतयोः
परस्परमनुप्रवेशोग्रासः अत्रस्पर्शान्मध्यग्रहणंयावद्येनमार्गेणच्छादकोगच्छति तस्यच्छादकमार्गस्यप्रमाणंज्ञातुंत्रिभुज
कल्पनाकृता सायथा ग्राह्यग्राहकयोःअवश्यंमानैक्यार्धतुल्यंअंतरंसएवकर्णः मध्यग्रहणकालिकःशरःकोटिः कोटिकृ
तंकर्णकृतेर्विशोध्यमूलंपूर्वापरोभुजोभवति अत्रवर्गांतरंयोगांतरघातसममतोमानैक्यखंडशरयोर्योगः मानैक्यखंडशरां
तरेणगुण्योवर्गांतरंभवति मानैक्यखंडशरांतरंग्रासएव अतोमानैक्यखंडमिषुणासहितंछन्नाहतमितिसिद्धं ततस्तदंगु
लात्मकंजातं कलीकरणार्थंगुणः ३ ततोघटीकरणार्थमनुपातः यदिगत्यंतरकलाभिःषष्टिघटिकाः तदाआभिर्भुजकला
भिःकिमिति फलंस्थित्यर्धघटिका एवंमानैक्यखंडशरयोगस्यग्रासगुणस्यपूर्वंगुणः३ इदानींषष्टिगुणः एवंजातोगुणघा
तोगुणः १८० गत्यंतरंहरः गुणहरौअष्टषष्ट्या ६८ अपवर्तितंजातंगुणस्थानेसावयवं२।३८।२०हरोगत्यंतरंयावत्अ
ष्टषष्ट्याभाज्यते तावच्चंद्रबिंबमेवभवति अतश्चंद्रबिंबमेवहरः अत्रखंडगुणनार्थंसषडंशत्रयमितोगुणोधृतः अत्रमूलंगृही
त्वाअनेनगुण्यं अत्राचार्येणास्यगुणस्य३।१०वर्ग१०कृत्वाअनेनवर्गएवप्रथमंगुणितस्ततोमूलंगृहीतंतुल्यमेवभविष्यति
यतोवर्गेणवर्गंगुणयेदित्यादिउक्तमिति अतोदशघ्नंततोमूलमित्युक्तं पूर्वंगुणखंडस्थानेएतावदधिकंगृहीतं०।३१।४०इदंष

ड्भिः सवर्णितं जातं ३।१० इदं पूर्वगुणतुल्यं जातं अतःस्वरशांशहीनमिति चंद्रबिंबं हरोस्ति अवोग्लौबिंबहृदिति एवंस्थिति घटिकाःस्युरित्युपपन्नं अथमर्दानयनेयुक्तिः तत्रसंमीलनकालेबिंबांतरार्धतुल्यंमध्येग्रहकेंद्रयोरंतरंभवति सचकर्णःमध्य शरःकोटिः अनयोर्वर्गांतरात्स्थितिवन्मर्दसिद्धिर्भवतीति अनुपातसादृश्यात् अतउक्तं तनुदलांतरखग्रहाभ्यांमर्दमिति एतेकृतेस्थितिमर्दयोःखंडेनसकलेयतःस्पर्शान्मध्यपर्यंतंएकंस्थितिखंडमध्यान्मोक्षपर्यंतमेकंस्थितिखंडंतथैवमर्दमपि मर्द खंडंतुखग्रासंसंभवेनान्यथेत्यर्थतएवसिद्धम् ॥ ५॥ अथस्पर्शमोक्षस्थितिसाधनमाह युग्माहताद्विगुणिताःयेव्यगोःभुजां

युग्माहतैर्व्यगुभुजांशसमैःपलैःसाद्विष्ठास्थितिर्विरहितासहितार्कषड्भात् ॥
ऊनेव्यगावितरथाभ्यधिकेस्थितीस्तःस्पर्शांतिमेक्रमगतेचतथैवमर्दे ॥ ६ ॥

शास्तन्मितैःपलैःसाद्विष्ठास्थितिर्विरहितासतीस्पर्शस्थितिःसहितासतीमोक्षस्थितिःस्यात् इदंकदातदाह अर्कषड्भात् द्वादशराशिभ्यःषड्राशिभ्यश्चव्यगौऊनेसति अधिकेसति इतरथाविपरीतं यत्रविरहितासामोक्षस्थितिः सहितासास्पर्श स्थितिः मर्देअपितथैवकार्ये अत्रोपपत्तिः अत्रतुअसकृत्प्रकारेणस्थितिखण्डेसाध्येते यथास्थितिखंडेनगतिर्गुण्याष ष्ट्याभाज्या फलंस्पर्शार्थंग्रहेषुहीनंमोक्षार्थंयुक्तं तेभ्यःपुनःशरादिकंविधायपृथक्स्थितिखंडेसाध्ये ततःपुनस्ताभ्यांस्थि तिखंडाभ्यांरविराहूचालयित्वाशरावानयित्वास्थितीकार्ये एवंअसकृत्समेभवतः इदंजडकर्मदृष्ट्वा आचार्येणेत्थमनुक ल्प्योंगीकृतः द्विगुणितव्यगुभुजभागतुल्यानिपलानिमध्यस्पर्शःस्थित्यंतरालेमध्यमोक्षस्थित्यंतरालेचस्वल्पांतरत्वात्तु

ल्यान्येवदृष्टानि अतोद्विगुणितव्यगुभुजभागतुल्यैः पलैःसास्थितिर्द्वियुतोनामोक्षस्पर्शस्थितिखंडेभवतइत्युपपन्नं युतोनि
तस्योपपत्तिर्यथा षड्भार्कभोनेव्यगौसतिस्पर्शकालार्थमृणचालनंदत्त्वामध्यकालीनात्न्यूनेसतिभुजवृद्धिरतःशरवृद्धिःशर
वृद्धौस्थितेरल्पत्वं अतःविरहितेसतिमोक्षार्थधनचालनेदत्तेव्यगोराधिक्यं तत्रभुजशराल्पत्वात्स्थितेराधिक्यं अ
तःसहितेति अर्कषड्भात्अधिकेव्यगौअग्रेभुजवृद्धिः पूर्वंभुजह्रासः अतोविपरीतमिति एकक्षेत्रमूलत्वात्स्थित्यर्धवन्मर्दा
र्धेअपिकार्यइत्युपपन्नम् ॥ ६ ॥ अथस्पर्शकालादिसाधनंकथयति तिथ्यंर्गणितागतायाःविरतिः अतःअयंग्रहस्य

तिथिविरतिरयंग्रहस्यमध्यःसचरहितःसहितोनिजस्थितिभ्याम् ॥
ग्रहणमुखविरामयोस्तुकालाविति पिहितापिहितेस्वमर्दकाभ्याम् ॥ ७ ॥

ग्रहणस्यमध्यः सःमध्यकालःनिजेयेस्थितीताभ्यांविरहितःसहितःसन्ग्रहणमुखंस्पर्शः विरामोमोक्षः तयोःकालौभव
तः इत्यनेनैवप्रकारेणस्वमर्दकाभ्यांपिहितापिहितेसंमीलनोन्मीलनेभवतः एतदुक्तंभवति तिथ्यंतकालोग्रहस्यमध्यः
सचतुर्षुस्थानेषुस्थाप्यः स्पर्शस्थित्यान्यूनःस्पर्शकालःस्यात् अन्यत्रमोक्षस्थित्यायुक्तोमोक्षकालःस्यात् तथाप्रथमम
र्दनोनोमध्यःसंमीलनकालोभवति द्वितीयमर्दनान्यत्रयुक्तोमध्यःउन्मीलनकालः मध्यकालात्पूर्वंस्थित्यर्धकालेनस्प
र्शोभवत्येवातोमध्यकालेस्पर्शस्थितिःन्यूनाकृता मोक्षकालस्तुमध्यात्अग्रतोमोक्षस्थित्यर्धेनभवत्यतोमोक्षस्थितियुक्तो
मध्योमोक्षोभवतीत्युपपन्नं तथैवमध्यात्मर्दार्धतुल्यकालाभ्यांसंमीलनोन्मीलनयोःकालौपूर्वापरौभवतएव ॥ ७ ॥

अथेष्टकालेग्रासमानयति पिहितेनग्रासेनहतंगुणितंयत्इष्टंघटिकाद्यंस्थित्याविहृतंकार्यंचेत् स्पर्शकालीनमिष्टं तदा स्पर्शस्थित्याभाज्यंमोक्षेष्टंचेत्तदामोक्षस्थित्याभाज्यमिति तत्फलंद्विष्ठंसचरणभूवासपादैकेनयुक्अभीष्टंग्रसनंअंगुलाद्यं स्यादितिव्याख्या अत्रोपपत्तिः अत्रेष्टकर्णंप्रसाध्यतदूनंमानैक्यखंडंकृत्वायच्छेषंतत्इष्टकालेछन्नंस्यात् इष्टकर्णान यनेप्रयासोस्ति अतोलाघवार्थमनुपातःकल्प्यः यदिस्थितिघटीभिःयथागतोग्रासस्तदेष्टघटीभिःकिमिति अतःपिहित हतेष्टंस्थितिविहृतमिति अत्रानुपातस्यासंभवः वृत्तक्षेत्रपरिध्याश्रितत्वात् अभावावपिभ्रान्तिःकृता अतोमहदंतरं

पिहितहतेष्टंस्थितिविहृतंतत्सचरणभू१५युग्रसनमभीष्टम् ॥ ८ ॥
त्रिभयुतोनरविःस्वविधुग्रहेयनलवाढ्यइतश्चरवद्दलैः ॥
नगशरेंदुमितैर्वलनंभवेत्स्वरविदिक्त्वथमध्यनताच्चयत् ॥ ९ ॥

स्यात् तत्रानुकल्पेनेत्थमंगीकृतं सचरणभूयुक्सूक्ष्मासन्नंभवति अथमध्यस्पर्शमोक्षादिदिग्ज्ञानार्थंतदुपयोगीवलनद्वयं साधयिषुस्तावदायनंसाधयति ॥ ८ ॥ स्वविधुग्रहेत्रिभयुतोनरविःकार्यः सूर्यग्रहणेरविस्त्रिभयुतःकार्यः चंद्र ग्रहणेरविरेवत्रिभोनःकार्यः ततःसःअयनलवैःअयनांशैःआढ्योयुक्तःकार्यः इतःसायनसूर्यात्नगशरेंदुमितैःदलैःखंडैः चरवत् यथाचरंक्रियतेतथाकार्यं तदायनवलनंभवति तस्यदिशामाह स्वरविःत्रिभयुतोनःयस्मिन्गोलेस्तितद्दिगित्य र्थः अत्रोपपत्तिः वलनंसाध्यं अहोकिंनामवलनं कस्मात्किंवलतीत्युच्यते सममंडलप्राच्याःसकाशात्नाडिकामंडल

प्राचीयावत्तांतरेणवलतितदाक्षवलनंअन्वर्थंनाम यतोनाडिकाभंडलसममंडलयोरंतरमक्षांशाएव तथैवनाडीमंडलप्रा
च्याःक्रांतिमंडलप्राचीयावत्तांतरेणवलतितत्आयनवलनं अयनसंबंधित्वादायनं तदादौसाध्यते गोलसंधौतुयद्यपिना
डिकामंडलक्रांतिमंडलयोगोस्ति तथापिप्राचीऋजुमार्गेणपरममंतरं परमक्रांतिवृत्तनाडीवृत्तयोर्यद्यपिपरममंतरं तथापि
ऋजुमार्गात्प्राच्यांतराभावः अतोयनसंधौवलनाभावः गोलसंधौपरमं गोलसंधौग्रहस्यदोर्ज्याभावात्कोटिज्यापरमा
अयनसंधौदोर्ज्यापरमत्वात्कोटिज्याभावः यत्रकोटिज्यापरमत्वंतत्रायनवलनस्यपरमत्वं यत्रकोटिज्याभावस्तत्रायन
वलनाभावःकोटिज्यातोवलनंसाध्यं तत्रग्रहःसत्रिभःतस्यभुजज्याकोटिज्यैवप्रत्यक्षंभवति एवंसूर्यग्रहणेसूर्यःत्रिभयुक्तइति
एवंचंद्रग्रहणेचंद्रस्यापित्रिभंयोज्यं तत्रसूर्यचंद्रयोःषड्भांतरत्वात्भुजतुल्यत्वं अतोरवावेवत्रिभंदेयं परमत्रत्रिभंहीनंकार्यं
गोलान्यत्वसद्भावात् ततःसायनःकार्यएव अयनसंबंधित्वात् अतःत्रिभयुतोनसायनरविदोर्ज्यातोवलनसाधनेनुपातो
यथा यदित्रिज्या१२०तुल्ययादोर्ज्यापरमक्रांतिज्यातुल्ययायनंवलनं ४८।४५ तदेष्टयाकिमिति अन्योनुपातः यदि
द्युज्यावृत्तेइदंतदात्रिज्यावृत्तेकिं एवंजातायनवलनज्या अस्याःधनुःआयनंवलनंस्यात्तत्रेदंगुरुकर्मदृष्ट्वा आचार्ये
णराशित्रयमध्येप्रतिराशिवलनानिप्रसाध्यतान्यधोधोविशोध्यखंडानिकृतानि ७।५।१ एवंतानिवलनानिअन्यत्रसंपू
र्णज्यावद्वलनप्रदानार्थंद्विगुणानिकृतानिसंति एवमेभिःखंडैश्चरवद्वलनंसाध्यं यतश्चरखंडान्यपिराशित्रयमध्येत्रीण्येवसं
ति अतोभुजर्क्षसंख्याचरार्धयोगइत्यादिसममेव एवमायनंवलनंप्रसाध्येदानीमाक्षजंवलनंसाधयति मध्यनताच्चयत्।९॥

मध्यनतात्मध्यकालद्युदलांतरंततंततःविषयैःपंचभिर्लब्धंयत्गृहादिराश्यादिततःउक्तवत्नगशरेंदुमितैरेवखंडैर्वलनंसाध्यं तत्पलभयाहतंगुणितं अक्षैःपंचभिर्हृतंभक्तंकार्यं तदाक्षंवलनंभवति तत्पूर्वपरेनतेक्रमात्उदगपाक्स्यात् पूर्वनतेउत्तरं पश्चिमनतेदक्षिणं एवमुभयोर्वलनयोर्यासंस्कृतिःसारसैःषड्भिःहृताभक्तासती अंघ्रयोवलनदिक्चरणाःस्युरित्यर्थः अत्रो पपत्तिः क्षितिजेयद्यपिनाडीमंडलसममंडलयोःसंपातः तथापिप्राचीऋजुमार्गयोस्तत्रपरममंतरंअक्ष ज्यातुल्यंखमध्येना डिकामंडलसममंडलयोर्यद्यपिपरमंतरमस्ति तथापिऋजुमार्गारंभात्प्राच्योरंतराभावः उदयेपरममक्षज्यातुल्यंआक्षंव

विषयलब्धगृहादितउक्तवद्वलनमक्ष ५ हृतंपलभाहतम् ॥

उदगपागिहपूर्वपरेक्रमाद्रसहृतोभयसंस्कृतिरंघ्रयः ॥ १० ॥

लनं तत्रनतमपिपरमंखमध्येआक्षवलनाभावः तत्रनतस्याभावः अतोनताद्वलनंसाध्यं अतोनुपातोयथा नतघटीनां पंचमांशोराशयःस्युः यतःपंचदशघटीनांमध्येराशित्रयं एवंनतस्यपंचांशस्यदोर्ज्यातोवलनंसाध्यं तद्यथा यदित्रिज्या १२० तुल्ययानतज्यया अक्षज्यातुल्यंपरमंवलनंतदेष्टनतदोर्ज्ययाकिमिति ततोद्युज्यावृत्तेइदंतदात्रिज्यावृत्तेकिमिति अत्रलाघवार्थंपंचमितांपलभांप्रकल्प्य सार्धद्वाविंशति २२।३० मितान्अक्षांशान्कृत्वापंचघटीषुत्रीणिवलनानिपृथक् प्रसाध्य तान्यधोधोविशोध्यततोर्ध्वानिकृत्वा वलनखंडानिक्रियंते तानितुपूर्वायनतुल्यान्येवभवंति अतस्तैरेववलन मिति परमेतद्वलनंपंचपलभाप्रमाणेनजातंस्वदेशीयकरणार्थमनुपातः यदिपंचपलभाप्रमाणेनेदंतदेष्टाक्षभयाकिमिति

अतोक्षहतंपलभाहतमिति पूर्वापरेनतेदक्षिणोत्तरमिति अस्योपपत्तिर्गोलोपरिप्रत्यक्षतोदृश्यते अथरसहतेत्यस्योप
पत्तिः अत्रेदंवलनंभागाद्यंवृत्तपरिधौदेयं अग्रएकमहादिक्मध्येअष्टौचरणाःकृताः ततोनुपातः यदिचक्रांशैःद्वा
त्रिंशत्सर्वेषांचरणाः ३२ लभ्यंते तदेष्टवलनांशैःकिमिति गुणहरयोर्गुणेनापवर्तितयोःलब्धाःहरस्थाने ११।१५ अत्र
वलनार्धंकृतमस्त्यतोहरार्धंकृतं ५।३७ अतोरसहतेत्युक्तंस्वल्पांतरत्वात् खच्छन्नंदिक्चरणसाधनमाह ॥ १० ॥
खषड्भिःषष्ट्याहन्यतेतत्तथा एवंभूतंपिहितंछन्नंमानैक्यार्धेनमानैक्यखंडेनहृतंभक्तंसत् यल्लब्धंतस्मात्यन्मूलंतत्तस्यच्छ

मानैक्यार्धहृतात्खषड्घ्नपिहितान्मूलंतदाशांघ्रयःखच्छन्नंसदलैक
युक्चगदिताःखच्छन्नजाशांघ्रयः॥सव्यासव्यमपागुदग्वलनजाशांघ्री
न्प्रदद्याच्छराशायाःस्याद्ग्रहमध्यमन्यदिशिखग्रासोथवाशेषकम् ॥ ११ ॥

न्नस्यआशांघ्रयोदिक्चरणाःस्युः खच्छन्नंसदलैकेनसार्धैकेनयुक्खच्छन्नाजायंतेतेतथा एवंभूताःआशांघ्रयोदिक्चर
णागदिताःउक्ताःस्युः ग्राह्यविंबार्धेनवृत्तंदिगंकंसमदंतकोष्टं ३२ किर्तंचक्रत्वातत्रशराशायाःशरस्यदिशमारभ्य अ
पाक्उदक्वलनजाशांघ्रीन्सव्यापसव्यंदद्यात् चेद्दक्षिणाःवलनांघ्रयःतदाशरदिशःसव्यंक्रमेणदेयाः चेदुत्तरास्तदा
पसव्यंव्युत्क्रमेण तत्रमध्यंमध्यग्रहणंस्यात् खग्रसनंखग्रासः अन्यदिशिमध्यग्रहणस्यस्पर्धिन्यामेवदिशिभवेत् खग्रा
साभावेविंबस्यशेषकंमध्यस्पर्धिन्यामेवदिशिभवेत् अत्रोपपत्तिः यदिमानैक्यखंडतुल्यग्रासेनदिगंघ्रि८वर्गःकल्पांतरःष

ष्टितुल्योवर्धते तदेष्टेनकिमिति तन्मूलंग्रासाद्दिक्चरणाइत्युपपन्नं एवंखच्छन्नांघ्रयोपिसाध्यास्तत्राचार्येणसार्द्धैकयु गित्युपलब्ध्यास्वल्पांतराःसाधिताः शेषोपपत्तिःस्पष्टा ॥ ११ ॥ अथस्पर्शमोक्षदिग्ज्ञानमाह मध्यग्रहणात्खच्छन्न स्यखग्रासस्यआशांघ्रिभिर्दिक्चरणैःप्राक्पश्चाद्दत्तैरिंदोश्चंद्रस्यस्पर्शमोक्षौस्तः एतदुक्तंभवति मध्यग्रहणचिह्नात्छन्नां घ्रयःपूर्वदिशियथागतागणयित्वादेयाः तत्रस्पर्शःचंद्रस्यभवेत् तथैवमध्यात्छन्नांघ्रयःपश्चिम दिशिदेयाः तत्रचंद्रस्यमोक्षः उष्णगोःसूर्यस्यव्यस्तंविपरीतं तद्यथा मध्यात्छन्नांघ्रयोहिपश्चिमतोदेयास्तत्रस्पर्शः पूर्वदिशिदेयास्तत्रमोक्षइत्यर्थः

मध्याच्छन्नाशांघ्रिभिःप्राक्चपश्चाद्दिंदोर्व्यस्तंतूष्णगोःस्पर्शमोक्षौ ॥
खग्रस्तात्खच्छन्नपादैःपरेप्राग्दत्तैरिंदोर्मीलनोन्मीलनेस्तः ॥ १२ ॥

खग्रस्तात्खग्रासचिह्नात् खच्छन्नांघ्रिभिःपश्चिमायांदत्तैःसंमीलनंस्यात् पूर्वदिशिदत्तैःउन्मीलनंस्यात् इतिसूर्यस्यविपरी तंपूर्वदिशिसंमीलनंपश्चिमदिश्युन्मीलनंस्यात् अत्रोपपत्तिः चंद्रग्रहणेतुग्रासस्यचंद्रस्यपूर्वगतेर्बाहुल्यात् अग्रेसरण्यः पूर्वदिशिग्राहकत्वेनवर्तमानायाःभूछायायाःबिंबांतश्चंद्रमाःप्रविशति अतश्चंद्रबिंबस्यपूर्वदिशिप्रथमंग्राहकबिंबेलग्नत्वात् तत्रस्पर्शः एवंग्रहणंकृत्वापूर्वगतिबाहुल्यात्चंद्रमाःभूछायांपश्चिमतस्त्यक्त्वागतः अतोनिःसरणेग्राह्यबिंबस्यपश्चिमदि शिसंयोगः अतस्तत्रमोक्षः उक्तंचसिद्धांतशिरोमणौ ‘ पूर्वाभिमुखोगच्छन्भूछायांतःशशीविशति ॥ तेनप्राग्ग्रहणंपश्चा न्मोक्षोस्यनिःसरतः’सूर्यग्रहणेहिसूर्यस्यग्राह्यस्यपूर्वगतेरपेक्षयाचंद्रस्यग्राहकस्यपूर्वगतिबाहुल्यात् ग्राहकेणपश्चिमस्थेन

पूर्वदिग्वर्तमानस्यग्राह्यस्यस्पर्शःकृतः अतोग्राह्यबिंबस्यपश्चिमदिशिस्पर्शः निःसरणवेलायांग्राह्यबिंबस्यपूर्वदिशिग्राहकबिंबलग्नं अतोत्रमोक्षः अनयैवयुक्त्या संमीलनोन्मीलनदिशोरुपपत्तिर्ज्ञातव्या ॥ १२ ॥ दैवज्ञवर्यस्यदिवाकरस्यसुतेनमल्लारिसमाह्वयेन ॥ वृत्तीकृतायांग्रहलाघवस्यसमाप्तइंदुग्रहणाधिकारः ॥ १ ॥ इतिश्रीगणेशदैवज्ञविरचितग्रहलाघवस्यटीकायांमल्लारिदैवज्ञविरचितायांचंद्रग्रहणाधिकारःपंचमः ॥ ५ ॥ ॥

लग्नंदर्शांतेत्रिभोनंपृथक्स्थंतत्क्रांत्यंशैःसंस्कृतोक्षोनतांशाः॥
तद्दिग्घ्यंशोवर्गितश्चेद्दिकोर्ध्वोधोसौघ्नूनःखंडितस्तद्युतःसः ॥ १ ॥
सार्कोहारःस्यात्त्रिभोनोदयार्कविश्लेषांशा १० शांशहीनघ्नशक्राः ॥
हाराप्ताःस्याल्लंबनंनाडिकाद्यंतिथ्यांस्वर्णंवित्रिभेर्काधिकोने ॥ २ ॥

अथसूर्यग्रहणाधिकारोव्याख्यायते ॥ ॥ तत्रादौलंबनंवृत्तद्वयेनसाधयति अमांतेलग्नंकृत्वातत्त्रिभेणराशित्रयेणऊनंसत्पृथक्अन्यत्रस्थाप्यं तत्क्रांत्यंशैःसंस्कृतःअक्षः अक्षांशाःनतांशाःस्युः संस्कारस्तुएकदिशोर्योगोभिन्नदिशोरंतरमितिप्रसिद्धः तेषांनतांशानांयोदिग्घ्यंशोद्वाविंशतिभागः सवर्गितःकृतवर्गःसन्चेद्दिकात्द्वयात्ऊर्ध्वःअधिकोभवति तदाऽसौअधःअन्यस्थानेस्थाप्यः ततोत्रद्व्यूनःद्विहीनःसन्खंडितःअर्धितःयत्फलंतेनसःपूर्वस्थापितःयुतः ततःसार्कोद्वादशयुक्तःसन्हारःस्यात् ततःत्रिभोनोदयोराशित्रयोनलग्नंअर्कःसूर्यः अनयोर्योविश्लेषःअंतरंयथाराशित्रयाल्पंतथाकार्यं

तस्ययेंशाःतेषांयःआशांशः १० दशमांशःतेनहीनाःसंगुणिताश्चयेशक्काःचतुर्दशतेहाराप्ताःसंतोनाडिकाद्यंलंबनंस्यात् त
त्तिथ्यांअमाघटीषुस्वर्णंकार्यं कदेत्याह वित्रिभेत्रिभोनलग्नेअर्कात्अधिकेधनंऊनेऋणमिति अत्रोपपत्तिः ननुकिंनाम
लंबनमुच्यते लंबनमित्यन्वर्थंनाम यतोदृक्सूत्राच्चंद्रोयावतांतरेणलंबितस्तल्लंबनंचंद्रग्रहणेकथंनास्ति सूर्यग्रहणेकथमुच्य
ते चंद्रग्रहणेतुचंद्रोग्राह्यःस्वकक्षायांभ्रमति भूछायापिग्राहकरूपाचंद्रकक्षायामेवसाधितास्ति अतोग्राह्यग्राह
कसमकक्षत्वात्लंबननत्योरभावः सूर्यग्रहणेतुग्राह्यग्राहकयोःसूर्यचंद्रयोःभिन्नकक्षात्वात्लंबननतीउच्यते अत्र
भंगंविरचय्य सूर्यस्यलंबननत्युपपत्तिंशिष्यान्प्रतिदर्शयेत् तत्रकिंचिदुच्यते प्रथमंभूवृत्तंलघुगतितिथ्यंशतुल्यां
शंकार्यं तदुपरिचंद्रकक्षावृत्तंकार्यं तस्मादुपरिसूर्यकक्षावृत्तं अत्रद्वयोर्वृत्तयोराशयोद्वादशांक्याः तत्रयथास्था
नेचंद्रकक्षायांचंद्रोदेयः सूर्यकक्षायांसूर्यलग्नेअपियथास्थानेदेये एवंभूगर्भान्नीयमानंचंद्रस्योपरियत्सूत्रंतद्गर्भसूत्रमित्यु
च्यते एवंभूपृष्ठान्नीयमानंसूत्रंदृक्सूत्रमुच्यते तत्तुसूर्योपरिनीयमानंचंद्रंसांतरंत्यक्त्वायाति अतश्चंद्रकक्षायांदृक्सूत्राच्चं
द्रोयावतांतरेणलंबितस्तल्लंबनं उक्तंच ‘ दृक्सूत्राल्लंबितश्चंद्रस्तेनतल्लंबनंस्मृतं ’ अतोहिभूगर्भस्थलोकानांसूर्यग्रहणेपिलं
बनाभावः दृग्गर्भसूत्रयोरेकीभूतत्वात् एवमत्रलंबनेकेवलंभिन्नकक्षात्वमेवकारणंनोवाच्यं भूगर्भेलंबनाभावदर्शनात्
अतोभिन्नकक्षात्वंद्रष्टॄणांभूपृष्ठस्थितित्वंचेतिद्वेलंबनकारणे लंबनंतुपूर्वापरं यतोगर्भसूत्रीयेचंद्रेदृक्सूत्रीकरणंपूर्वगत्यैव
एवंग्रहेपूर्वापरांतरोत्पत्तौदक्षिणोत्तरांतरमप्युपपन्नं तन्नतिसंज्ञं अत्रलंबनसाधनोपायोयथा दृग्गर्भसूत्रयोःपरममंत
रंचंद्रगतितिथ्यंशतुल्यकलानांसूर्यगतितिथ्यंशकलानामंतरतुल्यं ४८।४५ खमध्येतुदृग्गर्भसूत्रेएकीभूतेअतोलंबना

भावः उक्तंच ' दृग्गर्भसूत्रयोरैक्यात्खमध्येनास्तिलंबनम् ' इतिक्षितिजेरवितुल्यंलग्नं तस्यत्रिभेहीनेकृतेतत्सूर्यांतरंत्रिभ
भेवातोस्माल्लंबनंसाध्यं यतःखमध्येत्रिभोनलग्नंरवितुल्यं अतस्तदंतराभावेलंबनाभावश्च अत्रानुपातः यदित्रिज्यातुल्य
यासूर्यत्रिभोनलग्नांतरदोर्ज्ययेदंपरमलंबनं तदेष्टदोर्ज्ययाकिमिति अत्रलंबनकलानांघटीकरणार्थमनुपातः यदिगत्यंत
रकलाभिःषष्टिघटिकास्तदालंबनकलाभिःकिमिति जातंघटिकाद्यंपरमलंबनं अनेनदोर्ज्यागुण्यात्रिज्ययाभाज्येष्टलंबनं
स्यादित्यत्राचार्येणभागेभ्यएवसाधितं तद्यथा त्रिभोनोदयार्कविश्लेषांशाशांशहीनघ्नशक्राइति परमिदंलंबनमध्यमं य
तःखमध्यक्षितिजयोरंतरंसर्वत्रत्रिभमेवलक्षितं तन्न यतः याम्योत्तरक्षितिजयोरंतरंसर्वत्रत्रिभंनास्ति अतःखमध्यएवेदंलं
बनं इष्टयाम्योत्तरवृत्तीकरणार्थमनुपातः खमध्येतुत्रिभोनलग्नस्यनतांशाभावादुन्नतांशाःपरमाः अतोनुपातः यदिद्वादश
तुल्येत्रिभोनलग्नस्यच्छायाकर्णेइदंलंबनंतदेष्टच्छायाकर्णेकिमिति अत्रव्यस्तत्रैराशिकं एवमत्रेष्टत्रिभोनलग्नार्कांतरदो
र्ज्यायाःपरमलंबनमिदंघटिकाद्यमसकृत्प्रकारत्यागात्घटीचतुष्टयादूनंगृहीतं ३।४५अयंगुणःद्वादशच १२गुणः त्रिज्या
हरः१२०अत्रत्रिज्यातुल्येष्टदोर्ज्या १२०गुणघातगुणा त्रिज्याभक्तागुणघाततुल्याजाता ४५एतावतीत्रिज्याकृता ४५इ
यंत्रिभोनोदयार्कविश्लेषांशाशांशहीनघ्नशक्रतुल्याभवतिअतःसादोर्ज्याछायाकर्णभक्तास्पष्टंलंबनंस्यात् तदर्थंत्रिभोनल
ग्नस्यनतोन्नतलवाःसाध्याः ततोनुपातः यदिउन्नतांशज्याकोटौत्रिज्याकर्णःतदाद्वादशकोटौकइति एवमत्रच्छायाकर्णः
द्वादशभ्यःनतांशाद्द्वाविंशत्यंशवर्गेणाधिकोभवति अतोद्वादश १२नतांशद्वाविंशत्यंशवर्गयुक्ताःछायाकर्णःस्यात् तस्यहा

रसंज्ञाकृता यतः सदोर्ज्यांपाः हरःइदंनतांशद्वाविंशत्यंशवर्गेन्यूनेभवति अधिकेसांतरं तद्यथा द्व्यधिकाद्वयमपास्ययच्छे
षंतदार्धमपितेतत्रनतांशद्वाविंशत्यंशवर्गेणयुक्तंतावत्द्वादशच्छायाकर्णांतरं अनेनद्वादशयुक्ताःत्रिभोनलग्नच्छायाकर्णो
भवतिअनेनेष्टदोर्ज्याभक्तालंबनंस्यादित्युपपन्नं एतल्लंबनंचंद्रगत्यागुणयित्वाषष्ट्यालब्धं चंद्रेदेयं तथारवावपिदेयं ता
भ्यांतिथिःसाध्या अतोहितल्लंबनंतिथ्यामेवदेयमित्युक्तं धनर्णोपपत्तिर्यथा पूर्वकपालेदृक्सूत्रात्गर्भसूत्रंपूर्वस्यामधोलंबि
तं अतोग्रहेपूर्वकपालेधनंदेयं अत्रत्रिभोनलग्नमर्काल्पकमस्ति ग्रहेयद्धनंक्रियतेतत्तिथौऋणमेवभवति भोग्यत्वात् तथाप

त्रिकु १३ निघ्नविलंबनंकलास्तत्सहितोनस्तिथिवद्व्यगुःशरोतः ॥
अथषड्गुणलंबनलवास्तैर्युगयुग्वित्रिभतःस्फुनतांशाः ॥ ३ ॥

श्चिमकपालेदृक्सूत्रात्गर्भसूत्रंपश्चिमतोवर्तते अतोग्रहेऋणंत्रिभोनलग्नमत्रार्काधिकंयद्ग्रहेऋणंतत्तिथौधनं अतउक्तं
स्वर्णंवित्रिभेर्काधिकोनेइति एवंसूर्यग्रहेलंबनसंस्कृतोदर्शांतएवमध्यकालोभवति इयंयुक्तिर्गोलोपरिसविस्तरा अथलं
बनकालेव्यगोश्चालनमाह ॥ १ ॥२ ॥ त्रयोदशगुणितंलंबनंकलाःस्युः तिथिवद्व्यगुस्ताभिःकलाभिःसहितोनःतिथौ
चेल्लंबनधनंतदाव्यगावपिधनं ऋणंचेदत्रापिऋणमिति अतोमुष्माद्व्यगोःशरःपूर्ववत्साध्यः अथशब्दोनंतरवाची
षड्गुणलंबनंलवाःस्युः तैर्लवैःयुग्वियुक्वित्रिभवःनतांशाःसाध्याः ततःक्रांत्यक्षांशसंस्कारेणनतांशाःसाध्याः एतदुक्तंभ
वतिषड्गुणलंबनंभागास्तेत्रिभोनलग्नेलंबनेधनेसतिधनंकार्यं ऋणेलंबनेसतिऋणंकार्यं ततःक्रांत्यक्षांशसंस्कारेणनतांशाः

साध्याइत्यर्थः अत्रोपपत्तिः यदिषष्टिघटिकाभिःविपातचंद्रगतिकलाःएता७८७स्तदालंवनकलाभिःकिमिति गुणहरयो
र्हरेणापवर्तितयोःजाताःगुणस्थानेत्रयोदश१३ अतस्त्रिकुनिघ्नविलंवनमिति अथमध्यकालीनंत्रिभोनंकार्यंलग्नंतत्रला
घवार्थंलंवनेनदर्शांतकालीनंत्रिभोनलग्नमेवचालयति तत्रघटिकाःषड्गुणाःभागाभवंति यतःषष्टिघटिकानांचक्रभागाः
अतोहिषड्गुणलंवनंदर्शांतकालीनत्रिभोनलग्नेधनमृणंकार्यं तन्मध्यकालीनत्रिभोनलग्नंभवति अतोनतांशाःकार्यान
तिसाधनार्थमेव ॥ ३ ॥ अथनतिसाधनमाह दशभक्तायेनतांशास्तैःऊनाःसंतस्तएवगुणितायेअष्टेंदवस्तेकलाद्याःपृथ

दशहतनतभागोनाहताष्टेन्दवस्तद्रहितसधृतिलिप्तैःषड्भि ६।१८ राप्तास्तएव ॥
स्वदिगितिनतिरेतत्संस्कृतःसोंगुलादिःस्फुटइषुरमुतोत्रस्यात्स्थितिच्छन्नपूर्वम् ॥ ४ ॥

क्स्थाप्याः तैःरहिताहीनाःयेसधृतिलिप्ताःषड्भागाःअष्टादशकलान्विताःषड्भागाः ताभिःकलाभिःहीनाःकार्याइत्यर्थः
ततोयच्छेषंतेनतेपृथक्स्थाभाज्याः यल्लब्धंसास्वदिक् नतांशदिक्नतिःस्यात् एतयानत्यासंस्कृतःसःअंगुलादिःशर
स्फुटःस्यात् अमुतोहिस्पष्टशरादेवस्थितिच्छन्नपूर्वंसाध्यं अत्रोपपत्तिः नतिकारणंतुलंबनानयनेउक्तमेव तत्साध
नार्थमनुपातः यदित्रिज्यातुल्यया१२०नतांशज्यांपरमाःनतिकलाः४८।४५तदेष्टनतांशज्ययाकिमिति ताःन
तिकलाःत्रिभक्ताःअंगुलानिस्युः१६।१५ यथात्रत्रिज्या ८१ धृता इयंदशहृत्नतभागोनाहताष्टेंदु१८तुल्याभवति
इयंत्रिज्या ८१ केनभक्तापरमनतिःस्यादतःपरमनत्यंगुलंभक्ताजातोहरः ४।५७ अयंहरःत्रिज्यातुल्यकलोनसाष्टाद

शकलाषड्भागतुल्यएव अतस्तद्रहितसधृतिलिप्तैःषड्भिःतएवभक्ताःअंगुलाद्यानतिःस्यादित्युपपन्नं खमध्याद्दक्षिणतः उत्तरतोवात्रिभोनलग्नंयावद्भिर्नतांशैर्नतंस्यात् तद्दशेनैवदृक्सूत्राच्चंद्रोपिदक्षिणतउत्तरतोवानीतिसंज्ञेनांबरेणनतोभव ति अतोहिनतांशदिगेवनतिर्भवतीत्युपपन्नं इयंनतिःस्थूलास्वल्पांतराभवति अत्रनतिर्याम्योत्तरमंतरंशरोपियाम्यो त्तरः अतोनतिसंस्कृतएवशरःस्पष्टशरोभवति अस्मादेवच्छन्नस्थित्यादिकंसाध्यं यतोहिमानैक्यखंडंकर्णः ग्राह्य ग्राहकयोर्याम्योत्तरमंतरंकोटिः सातुनतिसंस्कृतशरतुल्यैवभवति चंद्रग्रहणेतुनतेरभावात्केवलशरतुल्यैवभवति अथ

स्थितिरसहितिरंशाविंत्रिभंतैःपृथक्स्थंसहितसहितमाभ्यांलंबनेयेतुताभ्याम् ॥
स्थितिविरहितयुक्तःसंस्कृतोमध्यदर्शःक्रमशइतिभवेतांस्पर्शमुक्त्योस्तुकालौ ॥५ ॥

स्पर्शकालमोक्षकालौसाधयति ॥ ४ ॥ षड्गुणस्थितिरंशाःस्युः तैरंशैःमध्यदर्शांतकालीनंपृथक्स्थापितंत्रिभोनलग्नंस्प र्शार्थंरहितंमोक्षार्थंसहितंकार्यं आभ्यांत्रिभोनलग्नाभ्यांपृथग्लंबनेसाध्ये ताभ्यांलंबनाभ्यांस्थित्याविरहितयुक्तोमध्ये गणितागतोदर्शःसंस्कृतःकार्यः तद्यथा स्पर्शार्थंतिथौस्थितिर्हीनाकार्या तस्यांतल्लंबनंधनऋणंलक्षणगतंकुर्यात् सःस्पर्श कालोभवति तथैवमोक्षार्थंदर्शांतेस्थितिर्योज्या तस्यांस्वीयंलंबनंसंस्कार्यं समोक्षकालोभवतीत्यर्थः अत्रोपपत्तिः स्थितिहीनयुक्ततिथेःपृथक्त्रिभोनलग्नेसाध्ये ताभ्यांलंबनेअपिसाध्ये तेस्थितिहीनयुक्ततिथौदेये तौस्पर्शमोक्षौभवत इत्यत्रलाघवार्थंत्रिभोनलग्नेस्थितिघटीभिश्चालिते तत्रस्थितिघटिकाःयावत्षड्गुणाःक्रियंतेतावद्भागाःभवंति तेभागाः

दर्शांतकालीनेत्रिभोनलग्नेस्पर्शकालीनकरणार्थंऋणंदेयाःप्राक्कपालत्वात् मोक्षार्थंधनंदेयाअग्रेसरत्वादित्युपपन्नं अत्रार्कोपिस्थितिचालितोगृह्यतेचेत्सूक्ष्मतास्यादितिद्रष्टव्यं अथसंमीलनोन्मीलनकालौसाधयति ॥ ५ ॥ एव मनयैवरीत्यामर्दात्मीलनोन्मीलनेस्तः एतदुक्तंभवति षड्गुणंभागाःस्युः तेदर्शांतकालीनत्रिभोनलग्नेसंमीलनार्थंहीनाः उन्मीलनार्थंयुक्ताः ताभ्यांपृथग्लंबनेसाध्ये ततश्चसंमीलनार्थंतिथौमर्दन्यूनंकार्यं तत्रतल्लंबनंकार्यंसम्मीलनकालो

मर्दादेवंमीलनोन्मीलनेस्तोग्रासोनादेश्योंगुलाल्पोरवींद्वोः ॥
धूम्रःकृष्णःपिंगलोल्पार्धसर्वग्रस्तश्चंद्रोऽर्कस्तुकृष्णःसदैव ॥ ६ ॥
इष्टंद्विघ्नंखच्छन्नक्षुण्णंस्पर्शांत्यांतर्नाडीभक्तम् ॥
रूपार्द्धेनोपेतंविद्यादिष्टकालेऽर्कस्यग्रासम् ॥ ७ ॥

भवति तथैवमर्दतिथौयोज्यं तत्रलंबनंद्वितीयंदेयंउन्मीलनकालोभवति अस्योपपत्तिःस्पर्शमोक्षवत्सुगमा रवींद्वोः सूर्यचंद्रयोःअंगुलादल्पोग्रासःअनादेश्यः यतोहिकिरणबलवशात्अल्पग्रासोनदृश्यतइति प्रत्यक्षहेतोःचंद्रोहिअल्पा र्धसर्वग्रस्तःधूम्रादिःस्यात् तद्यथा अल्पग्रहेधूम्रवर्णः अर्धग्रहेकृष्णः सर्वग्रहेपिंगलःस्यात् अर्कःसदाअल्पादिग्रा सेपुकृष्णः एकवर्णः अत्रदृग्गोचरतयैवोपपत्तिः ॥ ६ ॥ अथेष्टग्रासायनमाह इष्टंघटीपूर्वंद्विघ्नंद्विगुणं ततोहिच्छन्ने नग्रासेनक्षुण्णंगुणितंसत् स्पर्शांतयोःस्पर्शमोक्षयोःयाअंतर्मध्येनाडिकाःपर्वकालाख्यास्ताभिर्भक्तं ततोलब्धंरूपार्धेनउ

पेतंयुक्तंसत् अर्कस्येष्टकालेंग्रासंविद्यात्जानीयात् अत्रोपपत्तिः यदिस्थितिघटिकाभिःअयंग्रासस्तदेष्टघटीभिःकिमिति ग्रासोभीष्टघटीगुणःस्थित्याभाज्यः अत्रस्पर्शमोक्षस्थितीइष्टेपृथक्नकृते अतोहिपर्वकालएवहरोगृहीतः एवंहरस्य द्विगुणत्वात्इष्टंद्विगुणंकार्यमित्युपपन्नम् ॥ ७ ॥ दैवज्ञवर्यस्यदिवाकरस्यसुतेनमल्लारिसमाह्वयेन ॥ वृत्तौकृतायां ग्रहलाघवस्यजातोदिनेशग्रहणाधिकारः ॥ १ ॥ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरसुतगणेशदैवज्ञकृतग्रहलाघवस्यटीकायांमल्लारिदैवज्ञविरचितायांसूर्यग्रहणाधिकारःषष्ठः ॥ ६ ॥ ॥ ॥

अथमासगणात्सुलघुक्रिययाग्रहणद्वयसिद्धिकृतेभिदधे ॥
स्फुटसूर्यविपाततिथींश्चवपुर्ग्रसनादिविशेषचमत्कृतये ॥ १ ॥
क्षेपोभाद्यःखंकृताभूद्दशोऽर्केरुद्राःशैलानागचंद्राविपाते ॥
वृत्तेशून्यंवज्रिणश्चंद्रबाणावाराद्येद्वौव्यंग्निनंदाब्धयःस्यात् ॥२॥

अथमासगणादेवग्रहणद्वयसाधनाधिकारोव्याख्यायते ॥ ॥ मासगणात्सुतरांलघुक्रिययाग्रहणद्वयसिद्ध्यर्थं स्फुटान्सूर्यविपाततिथीन् तथावपूंषिबिंबानिग्रसनंग्रासःइत्यादिविशेषचमत्कारदर्शनार्थंअभिदधेअभिधास्ये तत्रादौ क्षेपकानाह ॥ १ ॥ अर्केभाद्योराश्याद्यःअयंक्षेपःस्यात् खंकृत्वाभूद्दशइतिविपातेव्यगोरुद्राःशैलाःनागचंद्राः क्षेपःस्यात् वृत्तेशून्यंवज्रिणश्चतुर्दशचंद्रबाणएकपंचाशत् वाराद्येद्वौव्यंग्निनंदाब्धयः विचरणैकोनपंचाशत् वार

स्थानेद्वौघटीष्वष्टचत्वारिंशत् ४८ पलेषुपंचचत्वारिंशत् ४५ अत्रोपपत्तिः ग्रंथशकादौरविचंद्रराहूणांक्षेपाः
प्रथममुक्ताःसंति एवंराहुक्षेपंचंद्रक्षेपेत्यक्त्वान्निपातःकृतः सूर्यक्षेपस्तुसिद्धएव वृत्तंचंद्रस्यमध्यकेंद्रंचंद्रोच्चक्षेपयोरं
तरंजातस्तस्यापिक्षेपः एवंतच्छकादौयन्मध्यमंतिथिर्वाराद्यंसवारादिकस्यक्षेपः अत्रमासगणोत्पन्नाग्रहामासादि
प्रतिपदिस्युः अतःपौर्णमास्यंतकरणार्थंपक्षचालनानिग्रहेषुक्षेप्याणि ततोलाघवार्थंक्षेपेष्वेवप्रक्षिप्यक्षेपाःपाठप

भानोःखंभूःखाब्धयोऽयंध्रुवःस्याच्छैलाःक्कर्काराशिपूर्वोव्यगोःस्यात् ॥
वृत्तस्यांकाभूरसाश्चाथतिथ्यावाराद्यस्याक्षाःखगास्तर्करामाः ॥ ३ ॥
मासौघतोद्विगुणितान्नगषड्भिराप्तराश्यादिनारहितमासगणोरविःस्यात् ॥
मासाग्रहाणिविनिजत्रिलवाश्चतेंशामासांघ्रितुल्यकलिकाःस्युरयंविपातः ॥ ४ ॥

ठिताः ॥ २ ॥ अथध्रुवानाह भानोःसूर्यस्यखंभूःखाब्धयःअयंराशिपूर्वोध्रुवःस्यात् व्यगोःशैलाःसप्तकुरेकः
अर्काःद्वादशध्रुवःस्यात् वृत्तस्यअंकाःनवभूरेकःरसाःषट् अथतिथिवाराद्यस्यअक्षाःपंचखगानवतर्करामाःषट्त्रिंशत्
अस्योपपत्तिः एकादशवर्षमितंचक्रं अतोहिएकादशवर्षाहर्गणात्रव्यादयःपूर्वोक्तवत्साधितास्तेध्रुवसंज्ञाइति ॥ ३ ॥
सूर्यविपातावेकवृत्तेनसाधयति द्विगुणितात्मासगणात्नगषड्भिःसप्तषष्ट्याआप्तंलब्धंयद्राश्यादिफलंतेनरहितोमासगणः
मध्यमरविःस्यात् अथयावंतोमासगणेमासाःतावंत्येवगृहाणिराशयःस्युः विगतोनिजःस्वकीयःत्रिलवोयेभ्यस्तेतथा

एवंभूतामासाःअंशाभागाःस्युः मासानांयःअंघ्रिश्चरणःतत्तुल्याएवकलिकाःअयंत्रिपातःस्यात् तत्रोपपत्तिः यदिकल्प
चंद्रमासैःकल्पग्रहभगणानांराशयोलभ्यंते तदेकमासेनकिमिति लब्धाःपृथक्पृथक्सूर्यविपातवृत्तवारादिकानांमास
गणाः ततोन्योनुपातः यद्येकमासेनैतेतदेष्टमासगणेनके अत्ररूपहरस्यअविकृतत्वात्नाशेकृतेमासगणेनैवतेगुणागु
ण्याः तेग्रहाःस्युरित्यत्रगुणानांचतुःस्थितत्वात्मासगणांकबाहुल्यात्गुणनेजडकर्मदृष्ट्वा आचार्येणखंडगुणनानिसर्वत्र
विहितानि तत्रादौरवेरयंराश्यादिर्मासगुणः०। २९। ६।१६ अत्रखंडगुणनार्थंएकोराशिरेवधृतः अतोमासगणतुल्यो
रविःस्यात् ततःतदेकस्माच्छुद्धंशेषं ०।५३।४४ इदंसप्तषष्ट्यासवर्णितंजातावुपरिद्वौ २ अतोद्विगुणमासगणात्स

स्वाद्यंशकेनरहितामनुतष्टमासावृत्तंगणाभ्रकुलवाढ्यलवंगृहादि ॥
स्वार्धान्वितादिनमुखंमनुतष्टमासामासौघतोदशगुणाद्भगुणाप्तियुक्तम् ॥ ५ ॥

प्तषष्टिलब्धंमासगणेन्यूनीकृतंसत् रविर्भवतीतिउपपन्नं तथैवायंविपातमासगुणः १।०।४०।१५ अत्रैकराशिरतोमा
साएवराशयः शेषस्यापिखंडद्वयंकृतं तत्रैकंखंडं ०।४० इदंत्रिभिःसवर्णितंजातौभागस्थानेद्वौ अतोमासाःद्विगुणास्त्रि
भक्ताइत्यत्रापियोराशिर्द्वाभ्यांगुण्यतेत्रिभिर्भज्यतेसतावत्स्वत्रिभागोनएवभवति अतोविनिजत्रिलवाइति मासाभागाः
स्युरिति अन्यत्खंडं ०।१५ इदंचतुर्भिःसवर्णितंजातंकलास्थानेरूपं अतोमासांघ्रितुल्यकलिकाइत्युपपन्नम् ॥ अथैक
वृत्तेनवृत्तवारादिकेसाधयति ॥४॥ मनुभिःचतुर्दशभिःतष्टाभक्ताविशिष्टायेमासास्तेस्वस्यअद्यंशकेनसप्तभागेनरहिताः
संतोगृहादिराश्यादिवृत्तंस्यात् परमेतद्गणस्यमासगणस्यअभ्रकुभिःदशभिःलवाःतेनाढ्याःयुक्ताःभागाःयस्यतत्एवंभूतं

कार्यं तथैवमनुतष्टाःमासाःस्वस्य अर्धेनअन्विताःयुक्ताःसंतोदिनमुखंवारादिकंस्यात् दशगुणात्मासगणाद्भगणैःसप्तविं शत्यधिकशतत्रयेणयाआप्तिःतयायुक्तंकार्यमित्यर्थः अत्रोपपत्तिः वृत्तगुणोराश्यादिः ०।२५।४८।५२ अत्रचतुर्दशभि र्मासैरेकंचक्रंभवति अतोभगणप्रयोजनाभावात्मनुतष्टमासाइत्युक्तं अत्रास्यैकोराशिर्धृतः एकशुद्धध्रुवः ०।४।११।८ अस्यापिखंडद्वयंकृत्वा अत्रेदंखंडंअधिकंगृहीतं ०।४।१७।८ सप्तभिःसवर्णितंजातंरूपं १ राशिस्थाने अतोहिस्वार्द्धांश केनरहिताइति अधिकंखंडं ०।६दशभिःसवर्णितंजातंभागस्थानेरूपं १ अतोगणाभ्रकुलवाढ्यमित्युपपन्नंअत्रतिथिवा

मासगणाज्जनितोरविरूनश्चक्रहतध्रुवकेणनिजेन ॥
संकलिताइतरेथचतेस्युःक्षेपयुतानिजमासिसितांते ॥६॥

रादिकस्यायंमासगुणः १।३१।५० अत्रखंडद्वयं १।३० इदंद्वाभ्यांसवर्णितंजातंगुणस्थानेत्रयं ३ योराशिस्त्रिगुणःद्वाभ्यां भज्यतेसःस्वार्धान्वितएवभवति अन्यत्खंडम् ०।१।५०इदंभगुणैःसवर्णितंजातोगुणस्थानेदश १० अतोदशगुणात्भग णाप्तियुक्तमित्युपपन्नम्॥५॥ध्रुवकक्षेपकाअत्रयोज्याइत्याह मासगणात्जनितःउत्पादितोरविःनिजेनस्वेनचक्रहतेनध्रुव केणऊनःकार्यः इतरेविपातादयःतेनसंकलिताःसंयोज्याः ततस्तेसूर्यादयःस्वीयेनक्षेपकेणयुताःसंतोनिजेभीष्टेमासिसितां तेपौर्णमास्यंतेस्युरिति अत्रोपपत्तिः चक्रहस्तास्तुध्रुवकाःग्रहेषुप्रक्षेप्याः एवंवर्षाणामेकादशतष्टत्वात् तत्ररवेर्ध्रुवकोद्वादश

शुद्धोस्ति अतस्तदूनोरविःकार्यः अन्येयोज्याएव यतःग्रंथशकादिमारभ्याग्रेसरकालादेवग्रहाःसाधिताः अतःसृष्ट्या
देःसकाशात्साधितायेग्रहास्तद्युक्ताएवेत्युपपन्नम्॥६॥पाक्षिकचालनंकथयति सूर्येपाक्षिकंपंचदशदिनभवंतदेतच्चालनंखं
शून्यंराशयः इंद्राश्चतुर्दशभागाःदेवास्त्रयस्त्रिंशत्कलाः विपातेनभःशून्यंराशयःबाणचंद्राःपंचदशभागाःनखाःविंशतिक
लाःवृत्तेषड्राशयःअर्काद्वादशभागाःयुगाक्षाःचतुःपंचाशत्कलाः दिनाद्येवाराद्येनभःशून्यंवारःअक्षाब्धयःपंचचत्वारिंश

रवौपाक्षिकंचालनंखेंद्रदेवाविपातेनभोबाणचंद्रानखाश्च ॥
षडर्कायुगाक्षागृहाद्यंचवृत्तेदिनाद्येनभोक्षाब्धयोबाणबाणाः ॥ ७ ॥
शरावेदपक्षाभुजंगाग्नयोर्केव्यगौषट्कृताःकुश्चषाण्मासिकंस्यात् ॥
शरावार्धयस्त्रीषवोभादिवृत्तेदिनाद्येतिथेर्द्यौभवाभूदिनाद्यम् ॥ ८ ॥

त्घटिकाःबाणबाणाःपंचपंचाशत्कलाः अत्रोपपत्तिः पूर्वमनुपातात्रव्यादीनांमासगणाःसाधिताःसंति तेषामर्धंचालनं
कृतं अमांतकालिकग्रहसाधनार्थमिति एतदेवद्वादशगुणंषण्मासचालनंचतुर्विंशतिगुणंवर्षचालनंभवतिसुगमम्॥ ७ ॥
अथषाण्मासिकचालनमाह शराःपंचवेदपक्षाःचतुर्विंशतिःभुजंगाग्नयोऽष्टात्रिंशत् इदमर्केषाण्मासिकंचालनंस्यात् व्य
गौषट्कृताःकुः वृत्तेशराःपंचवार्द्धयश्चत्वारः ४ त्रीषवःत्रिपंचाशत् तिथेर्दिनाद्येद्यौभवाःएकादशभूरेकः इदंदिनाद्यं

चालनंस्यात् ॥ ८ ॥ अथेष्टतिथिसाधनमाह अभिमतायाःइष्टायास्तिथेःसिद्ध्यैप्राक्पौर्णमास्याःपूर्वंपरेपश्चात्याः यावंत्यःइष्टतिथ्यःस्युस्ताःस्वस्ययुगरसलवेनचतुःषष्टिभागेनऊनाःसत्यःऊनाःदिनाद्येचालनंस्यात् स्वस्ययुगगुणलवेन चतुस्त्रिंशदंशेनऊनास्ताएवतिथयःदिनेशेसूर्येलवाद्यंचालनंस्यात् ततस्ताएवतिथयःविश्वैःत्रयोदशभिःहन्यंतेगुण्यंतेता स्तथा ततःस्वस्यगुणनवलवेनत्रिनवतिभागेनऊनाःवृत्तेचालनंस्यात् अत्रोपपत्तिः अत्रैकचांद्रदिनमानं०।५९।३।४५ यद्येकतिथावेतत्तदेष्टतिथिभिःकिमिति इदमिष्टतिथिगुणंरूपहरस्याविकृतत्वान्नाशः अत्रखंडगुणनार्थमस्यैकएवगृ

अभिमततिथिसिद्ध्यैप्राक्परेयास्तुतिथ्यःस्वयुगरसलवोनाश्चालनंस्याद्दिनाद्ये ॥
स्वयुगगुणलवोनाःस्याल्लवाद्यंदिनेशेस्वगुणनवलवोनाविश्वनिघ्नाश्चवृत्ते ॥ ९ ॥

हीतः अतइदमेकशुद्धंकृत्वाजातं ०।०।५६ । १५ चतुःषष्ट्यासवर्णितमूर्ध्वस्थानेरूपं अतःस्वयुगरसलवोनास्तिथ योवाराद्येदेयाः पूर्वेऋणंअग्रेधनमितिचालनेप्युक्तमस्ति अथरविचालनोपपत्तिः तत्ररवेःचांद्रदिनांतर्वर्तिनीमध्यग तिरियंभागाद्या ०।५८।१४ अस्याअप्यंकाःगृहीताः अतइदंरूपशुद्धंजातं ०।१।४६ इदंतुचतुस्त्रिंशत्सवर्णितंजात मूर्ध्वंरूपं १ अतोयुगगुणलवोनाः ३४ तिथयोरविचालनमिति अथवृत्तचालनंवृत्तस्यचंद्रमंदकेंद्रस्य ० चांद्रदिनां तर्वर्तिनीमध्यगतिर्भागाद्या १२।५१।३७ अस्यास्त्रयोदशगृहीताः अतइयंत्रयोदशशुद्धं ०।८।२३ इदंत्रिनवतिसव र्णितंजाताःऊर्ध्वंत्रयोदशैव अतोविश्वनिघ्नाःस्वत्रिनवतिभागोनास्तिथयोवृत्तचालनमिति ॥ ९ ॥

अथरविस्पष्टार्थंतिथेरपिस्पष्टार्थंसूर्यचंद्रयोर्मंदफलेसाधयति । एतानिखंडानिस्युः अत्यष्टिः१७सप्तदश अष्टिः१६ षोडश वृषाणश्चतुर्दश१४ अर्कादादशगावःनवशराःपंचदशौद्वौतैःखंडकैःकृत्वावृत्तस्यदोर्भुजःतस्ययेभागाःतेषांयःत्रींदु भिःत्रयोदशभिःलवभागः यन्मितःस्यात् तन्मितानांखंडानांऐक्यंततत्आगतेनखंडकेनहन्यतेतथाएवंभूतस्यउच्छि ष्टस्यशेषस्ययस्त्रींदुलवस्त्रयोदशभागःतेनयुक्तंसत् प्राग्वदितिवृत्तेमेषादिषट्केधनं तुलादिषट्केऋणंचंद्रफलंस्यात् इत्यनेनै वप्रकारेणरवेःमंदकेंद्राद्भुजादिविधिनाएभिःखंडैःसूर्यमंदफलंसाध्यं तद्वद्यातं ततःस्वस्यांगलत्वेनऊनितंकार्यं तयोः

अत्यष्ट्यष्टिवृषार्कगोशरद्दशःखंडानितैर्वृत्तदोर्भागत्रींदुलवप्रमैक्यमगतघ्नोच्छिष्टविश्वांशयुक्।।प्राग्व त्स्यात्स्वमृणंफलंत्वितिरवेःकेंद्राद्यदन्यच्चतद्ध्यातंस्वांगलवोनितंकुरुतयोःकार्यापुनःसंस्कृतिः१०

सूर्यचंद्रफलयोःसंस्कृतिःकार्या संस्कृतिर्यथा धनयोर्योगऋणयोरपियोगःधनर्णयोरंतरमिति अत्रोपपत्तिःअत्र वृत्तंत्रयोदशभागांतरंप्रकल्प्यपूर्वोक्तवन्मंदफलंखंडानिचंद्रस्यसाधितानिराशित्रयमध्येसंतैवएतानिमंदफलखंडानिसाव यवान्यतोद्विपंचदशगुणानिनिःशेषाणिभवंति अतःपंचदशगुणानिकृत्वापठितानि अत्रेष्टफलार्थमनुपातः यदित्रयो दशभागैरेकंखंडंतदेष्टवृत्तदोर्भागैःकिमिति लब्धमितखंडानामैक्यंकार्यं ततःशेषादनुपातः यदित्रयोदशभागैर्भोग्यखं डंतदाशेषांशैःकिमिति लब्धंगतखंडयोगेयोज्यंतत्फलंस्यात् धनर्णोपपत्तिःस्पष्टीकरणाधिकारेउक्तैवास्ति एवंरविकेंद्रा दपिमध्यफलंसाध्यं तत्रलाघवार्थंएभिरेवखंडैःरविकेंद्रादपिफलंसाध्यमित्युपपन्नं अत्रचंद्रफलंकेनभक्तंरविफलंस्यादि

त्तिज्ञानार्थंसूर्यफलेनपरमेण २ । १० चंद्रपरमफले५।२भक्तेलब्धंद्वौ २ अतश्चंद्रफलंद्वघातं एवंद्विभक्तंचंद्रफलं२।३०
सूर्यफलात् $\frac{१}{२}$ यदधिकंशेषं $\frac{२}{३०}$ तद्विभक्तस्यषडंशाः अतउक्तंस्वषडंशविवर्जितमिति एवमुभयोःफलयोःसंस्कृतिःकार्या
तिथ्यौदेयत्वात्॥ १०॥अथहरंसाधयति।वृत्तस्ययदेष्यदलं भोग्यखण्डंतस्माद्यारसाप्तिःषडंशःतेनसगुणांशःसत्र्यंशःखव
ह्नयःत्रिंशत्कर्किमृगादिकेवृत्तेयुक्ताःरहिताःकार्याः कर्कादिषड्भेयुक्ताःमकरादिषड्भेरहिताःसंतोहरःस्यात् अथसूर्याच्चरंदि
नमानंचपूर्ववत्साध्यं अस्योपपत्तिः इयंफलसंस्कृतिस्तिथ्यौदेयातोघटीकरणार्थमनुपातः यदिगत्यंतरकलाभिःषष्टिघटि

वृत्तैष्यदलाद्रसाप्तियुक्तारहिताःकर्किमृगादिकेचवृत्ते ॥
सगुणांशखवह्नयोहरःस्यादथसूर्याच्चरमुक्तपूर्ववत्स्यात् ॥ ११ ॥

कास्तदाएभिःफलकलाभिःकतिघटिकाः एवमत्रफलभागानांपूर्वंकलीकरणार्थंषष्टिर्गुणः एतत्फलंपंचदशगुणितमस्ति
सावयवत्वात् अतःपंचदशहरःगुणहरयोर्हरेणापवर्तितयोर्जातोगुणः ४ इदानींषष्टिर्गुणः ६० अतोगुणघातोजातोगुणः
२४० हरस्तुगत्यंतरकलाः तास्तुमध्यमाएवगृहीताः ७३० गुणहरयोश्चतुर्विंशत्याअपवर्तितयोःजातोगुणः१०हरः
३०।२० पलसंस्कृतिर्दशहृतेत्यग्रेउक्तमस्ति अयंहरोमध्यःअतःस्पष्टत्वं यथावृत्तभोग्यखंडपरमं१७ इदंकेनगुणंपर
मंगतिंफलंभवति अत्रेदंभोग्यखंडंवेदैर्गुण्यं ततःचतुर्विंशत्याअपवर्तितं गुणहरयोर्गुणेनापवर्तितयोर्जातोहरःषद् इदंफ
लंसगुणांशकवह्निमितेहरेसंस्कार्यं तत्रकर्कादिषट्केकेंद्रेगतिफलंधनं अतोयुक्ताइति मकरादिषट्केऋणमतोरहिताइति ए

वंजातःस्पष्टोहरः अतोहिफलसंस्कृतिर्दशहताहारोद्धृतानाड्यःस्युरित्युपपन्नं तदेवाह ॥ ११ ॥ फलयोःसंस्कृतिर्दशगुणास्पष्टहरभक्तासतीनाड्यःस्युः अथोचरंसायंलक्षणकंविपरीतलक्षणं धनंचेत्तदाऋणमृणंचेत्तदाधनमिति स्वांघ्रिणास्वचरणेनऊनानिरेखास्वदेशांतरयोजनानिरेखातःपश्चात्स्युरेऋणंपूर्वस्यांधनं एवंत्रिभिःफलैरेभिःसंस्कृतातिथिःस्पष्टास्यात् तत्संस्कारःतेषांफलानांयःसंस्कारःतत्समाःकलिकाःव्यगौउष्णगौचदेयाः अत्रोपपत्तिःफलनाडीकरणोपपत्तिःपूर्वमेवोक्ता चरव्यस्तत्वेहेतुर्यथा यद्यहेऋणंतत्तिथौधनंयद्धनंतदृणंभोग्यत्वात् अतःचरंविपरी

नाड्यःस्युःफलसंस्कृतिर्दशहताहारोद्धृताथोचरंसायंलक्षणकंत्वथोविघ
टिकाःपश्चादृणंप्राग्धनम् ॥ स्वांघ्र्यूनांतरयोजनान्यथतिथिःस्पष्टात्रि
भिःसंस्कृतातत्संस्कारघटीसमाश्चकलिकादेयाव्यगौचोष्णगौ ॥ १२ ॥

तं रेखास्वदेशांतरोपपत्तिःपूर्वंभतिपादितास्ति तिथिःरविचंद्रांतराद्भवति अतोगत्यंतरादनुपातः यदिभूपरिधियोजनैः४८०० गत्यंतरकलाःलभ्यंते तदारेखास्वदेशांतरयोजनैःकिमिति पुनर्घटीकरणायानुपातः यदिगत्यंतरकलाभिःषष्टिकलाः ६० तदाभिःकिमिति गत्यंतरकलातुल्ययोर्गुणहरयोर्नाशः पुनरस्यफलस्यपलीकरणार्थंषष्टिगुणः६० एवंगुणघातोगुणः३६०० हरः४८०० गुणहरौद्वादशशतापव१२००र्तितौगुणः३ हरः४ अतः

स्वांघ्यूनानियोजनानिपलानिस्युरित्युपपन्नं एततूफलत्रयसंस्कृतातिथिःस्पष्टाभवतीत्युपपन्नं रविव्यगूमध्यमतिथ्यं तकालीनौतयोःस्पष्टतिथिकालीनकरणार्थंफलसंस्कारघटोभिश्चालनंदेयं अतोलाघवार्थंस्वल्पांतरत्वात्संस्कारघटी समाःकलाःसूर्यैव्यगौदेयास्तौतात्कालिकौमध्यमौभवतइति अतःतयोःस्पष्टत्वार्थंफलंसाधयति ॥ १२ ॥ इना त्सूर्याज्जायतेतत्तथाएवंभूतंफलंस्वस्यअर्हल्लवेनचतुर्विंशत्यंशेनयुक्तं युगघ्नंचतुर्गुणितंसत् ताःलिप्ताःकलाःस्युःतास्तयोः सूर्यविपातयोःकुरु तौस्फुटौस्तः वित्र्यंशौयौद्वौताभ्यांयुतोहरःकृशानुभिस्त्रिभिःभक्तःसन्फलंअंगुलाद्यंचंद्रस्यबिंबंप्रभव

सस्वार्हल्लवमिनजंफलंयुगघ्नं लिप्तास्ताःकुरुचतयोःस्फुटौचतौस्तः ॥
वित्र्यंशद्वियुतहरःकृशानुभक्तश्चंद्रस्यप्रभवतिबिंबमंगुलाद्यम् ॥ १३ ॥

ति अत्रोपपत्तिः अत्ररविफलंपंचदशभिर्भाज्यं पूर्वंपंचदशगुणितत्वात् ततःकलार्थंषष्टिर्गुणः गुणहरयोर्हरेणापवर्तित योर्जातोगुणः४ अतोयुगघ्नमिति अत्रप्रथमंरविफलंपरमं एतावत्२।५।३१ धृतंएतन्मितंधार्यं२।१०।३१ अतःअ नयोरंतरमिदं०।५ इदंसवर्णितंचतुर्विंशत्याजातंद्वयंफलंतुल्यमेव अतःसस्वार्हल्लवमिति ताःफलकलारविव्यग्वोर्देयास्तौ स्फुटौभवतः अथचंद्रबिंबस्योपपत्तिः अत्रगतेर्बिंबानयनंकार्यमित्यत्रहरोपिगतिखंडमतोहरादनुपातः यद्यस्मिन्मध्य मेहरे३०।२० इदंचंद्रबिंबं १०।४० तदेष्टस्पष्टहरेकिमिति अत्रगुणाद्धरोहित्रिगुणासन्नोतःअत्रवित्र्यंशैःद्वौक्षेप्यौ

ततस्त्रिगुणचंद्रबिंबंभवति अतउक्तं वित्र्यंशद्विघुतहरःकृशानुभक्तश्चंद्रबिंबमिति ॥१३॥ अथसूर्यबिंबभूभाबिंबेसाधयति
खाब्धिभिश्चत्वारिंशद्भिः ४० आप्तंभक्तंचतत्अर्कस्यअगतदलंभोग्यखंडंतेनव्यरिलवभवाःविषड्लवाःएकादशयुतोनाः
कार्याः कदेत्याह स्वकेंद्रेसूर्यस्यमंदकेंद्रेकुलीरनक्राद्येसति कर्काद्येयुताःमकराद्येऊनाःसंतःअंगुलादिसूर्यबिंबंस्यात् विग
ताइषवःपंचयस्मात्सतथाएवंभूतोहरःस्वस्यतिथिलवेनपंचदशांशेनयुक्तुभास्यात् अस्यांकुभायांखाक्षैःपंचाशद्भिरातंभ
क्तंयदर्कस्यअगतदलंभोग्यखंडंतत्नक्रकर्कादिकेंद्रेधनर्णकार्यं मकरादौधनंकर्कादौऋणं ततभूछायाबिंबंभवति अत्रोप

खाब्ध्याप्ताकांगतदलयुतोनाःस्वकेंद्रेकुलीरनक्राद्येस्याद्व्यरिलवभवाअंगुलाद्यर्कबिंबम् ॥
हारोवीषुःस्वतिथिलवयुक्स्यात्कुभास्यांधनर्णंखाक्षाप्ताकांगतदलमतोनक्रकर्कादिकेंद्रे॥१४॥

पत्तिः मध्यगतिःप्रमाणेनरवेर्मध्यबिंबमिदं १०।५० यदिमध्यगत्याइदंतदास्पष्टगत्याकिं अत्रभोग्यखंडपरमत्वेगतिफल
परमत्वमित्यत्रभोग्यखंडात्गतिफलंप्रसाध्यबिंबंसाध्यं तदत्रपरमंबिंबं ११।१५ अनयोर्मध्यस्पष्टयोरंतरं ०।२५ इदंप
रमभोग्यखंडस्यास्य १७ चत्वारिंशत्तमोभागः अयंमध्यबिंबेदेयः कर्कादौगतिफलंधनं अतोयुतोयुक्तः मकरादौगति
फलंऋणं अतोहीनः एवंरविबिंबंभवति अथभूभाबिंबोपपत्तिः अत्रचंद्रमध्यगतिवशात्जातंभूभाखंडमेकं २७ इदंमध्यह
रस्य ३०।२० पंचोनितस्यस्वतिथिलवयुक्तस्यसमंभवति अतोहिस्पष्टहरादेवंसाध्यं तदत्रसूर्यगतिफलोत्थंबिंबंभूछायाया

मस्यांदेयं तत्रसूर्यभोग्यखंडस्यपंचदशांशोदेयइतिदृश्यते यतोहिपरमभोग्यखंडमिदं १७ त्र्यंशोनाष्ट ७।४० भक्तंरवि गतिफलंभवति २।१३ तदपिसप्तभक्तंभूभाखंडंभवति अतोयंहरघातोहरः ५० भोग्यखंडंपंचाशद्भक्तंतत्रभूभाखंडेदेयः म करादौऋणंफलंगतेः अतःतत्भूभायांयुज्यते कर्कादौधनंफलंतद्भूभायांन्यूनंभवति एवंबिंबादिप्रसाध्येदानींग्रहणसंभूति माह॥१४॥ एवंतिथिपूर्वकंज्ञात्वाशेषंग्रहणजंशरस्थित्यादिपूर्ववत्चंद्रग्रहणोक्तवद्भवेत् अर्केंद्वोःसूर्यचंद्रयोःग्रहणंषण्मा

ज्ञात्वैवंतिथिपूर्वकंग्रहणजंशेषंभवेत्पूर्ववत्षण्मासैरुतपक्षवर्जित-
युतैःपक्षेथवालोकयेत् ॥ अर्केंदुग्रहणंव्यगोर्भुजलवैस्तिथ्यल्पकै
रुष्णगोर्याम्यैर्वस्वधरैर्द्युरात्रिगतिथौचाहर्निशामाश्रिते ॥ १५ ॥

सैःग्रहणादन्यद्ग्रहणं अथवापक्षवर्जितयुतैःषण्मासैःसार्धषण्मासैःसार्धपंचमासैर्वाआलोकयेत् ग्रहणसंभूतिंपश्येत् तत्संभ वमाह व्यगोर्भुजभागैःतिथ्यल्पकैःसद्भिर्ग्रहणंतुविशेषेउष्णगोःसूर्यग्रहणेव्यगुभुजभागैर्याम्यैर्दक्षिणगोलजैःवस्वधरैःस द्भिर्ग्रहणं तद्यथा सूर्यग्रहणेयदाव्यगुरुत्तरगोलेतदातद्भुजांशैःतिथ्यल्पकैरेवग्रहणं यदियाम्याःभुजभागाःतदाष्टाधिक त्वेग्रहणसंभवोनास्तीत्यर्थः द्युरात्रिगततिथौसत्यांसूर्यग्रहणंतुदिवातिथौसत्यांभवति चंद्रग्रहणंतुरात्रौतिथौसत्यांभवति

अथवाअहर्निशंतिथौआश्रितेकिंचिद्दिनरात्रिस्पर्शेतिथौसतिसूर्यचंद्रग्रहणेभवतइतिव्याख्या अस्योपपत्तिःप्रतिपादितप्रमेयातिसुगमाच ॥१५॥ अथग्रासंसाधयति अयंहरःसत्र्यंशैर्गुणैस्त्रिभिःऊनितस्ततःवेदैःचतुर्भिर्हन्यतेसतथा ततः अंकैःनवभिःहृतोभक्तःव्यगुभुजांशैर्हीनःकार्यः चेद्धीनोनस्यात्तदाग्रहणमेवनास्ति ततःसहभवैरेकादशभिःताडितोगुणितःअद्रिहृत्सप्तभक्तः इष्टंफलंशीतरुचःचंद्रस्यअंगुलादिच्छन्नंवाप्रकारांतरेणस्यात् अत्रोपपत्तिः शरोनंमानैक्यखंडं

सत्र्यंशगुणोनितोहरोयंवेदघ्नोंकहृतोव्यगोर्भुजांशैः ॥
हीनोभवताडितोद्रिहृत्स्याच्छन्नंशीतरुचोंगुलादिकंवा ॥ १६ ॥

ग्रासइतिमुख्ययुक्तिः तदत्रमध्यमंमानैक्यखंडमिदं १८।५२ अतएवभागाःसाधिताः विलोमविधिनाशरवत्व्यगुभुजभागाःभवघ्नाःसप्तभक्ताःशरोभवति अतोव्यस्तविधिनामानैक्यखंडंसप्तगुणएकादशभक्तंजाताभागाः १२ एतेमध्यहराद्यथागच्छंतितथाकार्यं अतःमध्यहरेसत्र्यंशगुणोनितेसतिसप्तविंशतिःसप्तविंशतिर्यावत्चतुर्गुणानवभिर्भज्यते तावद्द्वादशभागाएवभवंति अतःसत्र्यंशगुणोनितचतुर्गुणोनवभक्तोभागाःस्युः तेभ्यःव्यगुभुजभागाःऊनाःकार्याः शरस्यन्यूनीकर्तव्यत्वात्ततोभागाभवगुणाःसप्तभक्ताः छन्नमंगुलाद्यंचंद्रस्यभवतीत्युपपन्नम् ॥ १६ ॥ ॥

अथरविग्रहणेग्रासानयनंस्थूलमाह दर्शांतकालीनंयन्नतंतस्यनाडिकाःघटिकाःयास्तासांअंघ्रिःचतुर्थांशोराश्यादिःते
नप्राक्पूर्वनतेरहितात्गृहादिकात् रवेःसूर्यात्परेपश्चिमनतेयुतात्येनतांशकाःस्युः तस्यक्रांतिरक्षांशैःसंस्कृतानतांशाः
भवंति तेषांनतभागानांयोरसांशकषडंशःतेनव्यगोःभुजलवाःसंस्कारिताः एकदिशोर्योगोभिन्नदिशोरंतरमितितेस्फु
टाःस्युः ततस्तेसप्तभ्यःशुद्धाःकार्याः यदिनशुध्यंतितदाग्रहणमेवनास्ति तेनिजेनअर्धेनसहिताःसंतोरवेःअंगुलादिकंस्फु
टंस्थगितंग्रासःस्यात् इतिव्याख्या अत्रोपपत्तिः अत्ररविग्रहणेलंबननतिसाधनंविनाग्रहणसंभवोपिनज्ञायते अतः

अमांतनतनाडिकांघ्रिरहिताद्युतात्प्राक्परेगृहादिकरवेर्नतांशकरसांशसंस्कारिताः ॥
व्यगोर्भुजलवाःस्फुटाःस्युरथसप्तशुद्धाश्चतेनिजार्धसहितारवेःस्थगितमंगुलाद्यंस्फुटम् ॥ १७॥

स्थूलेलंबननतीसाध्येते नतघटीनांचतुर्थांशोलंबनंतद्दर्शांतेदेयं पुनस्तत्कालीननतात्यःपंचमांशःसरवौपूर्वकपालेयावतन्यू
नीक्रियते पश्चिमकपालेयुक्तःक्रियतेतत्रिभोनलग्नंभवति अत्रचतुर्थांशसंस्कृतस्यपंचमांशःकेवलचतुर्थांशतुल्यएवभव
ति अतोनतघटीनांचतुर्थांशःपूर्वापरेनतेरवौहीनाधिकःकार्यः तत्रिभोनलग्नंस्यात् तस्यनतांशाःकार्याः तेभ्योनतिः
साध्या साशरेणसंस्कार्या सःस्पष्टशरोमानैक्यखंडान्निष्कासनीयोग्रासःस्यादित्यर्थंलाघवार्थंनतभागोत्थनतिभागैः
व्यगुभुजभागायेविहीनाःकृताः तद्यथा नतभागानांचतुर्थांशःस्थूलानतिर्भवति नतिस्तुस्पष्टशरखंडंअतोस्याः
भागकरणार्थंसप्तगुणःएकादशहरः ११ एवंचत्वारोहरः ४ एवंजातोहरघातोहरः ४४ गुणहरयोर्गुणेनापवर्तितयो

र्लब्धाःहरस्थानेषट्नतांशरसांशसंस्कारिताःव्यगुभुजभागाःस्युरिति अत्ररवेर्मांनैक्यखंडमिदं ११ मध्यंकियद्भ्यःभुज
भागेभ्यःस्यादिविज्ञानार्थंसप्तगुणंएकादशभक्तंजाताभागाःसप्त ७ अतःएतेषुभागेषुसप्तभ्योन्यूनेष्वेवग्रहणं अतःसप्त
शुद्धाःशरार्धंस्थूलत्वात् निजार्धसहिताइतितत्अंगुलादिकंसूर्यग्रहणेछन्नंभवतीत्युपपन्नम् ॥ १७॥ अथपर्वेशानयनमाह
क्षेपचक्रध्रुवयुक्तस्यव्यगोःमध्यःयःपर्ययगणःमध्यग्रहानयनेराशयोद्वादशभिर्भज्यंतेफलंपर्यायाःसपर्ययगणःद्विगुणः
कार्यः वणिगादिगेतुलादिषड्भस्थेव्यगुगृहेसतिकुयुतःएकयुतस्ततोसौस्मृतंयच्चक्रसंज्ञंतेनयुतः ततोमुनिहृतोर्वरितःसप्त

व्यगुमध्यपर्ययगणोद्विगुणोवणिगादिगेव्यगुगृहेकुयुतः॥
स्मृतचक्रसंज्ञकयुतोविधितोगतपर्वपोमुनिहृतोर्वरितः ॥ १८ ॥

ष्टावशिष्टःसन्विधितोब्रह्मणःसकाशात्शेषतुल्योगतःपर्वग्रहणंपातितथापर्वेशःस्यात् पर्वेशाःसप्त ७ उक्तंचवराहसंहिता
यां"षण्मासोत्तरवृद्ध्यापर्वेशाःसप्तदेवताःक्रमशः॥ ब्रह्मशशींद्रकुबेरावरुणाग्नियमाश्चविज्ञेयाः॥" अत्रोपपत्तिः मासष
ट्केनएकःपर्वेशःपर्वमध्येद्वौवर्षमध्येतुव्यगुपर्यययोप्येकः अतःसद्विगुणःपर्वेशःस्यादित्युपपन्नं सराशिषट्कस्थएवतयोराशिष
ट्कांतरंएकवृद्धिः अतस्तुलादिगेव्यगौकुयुतइति अत्रैकादशवर्षात्मकंचक्रं चक्रमध्येद्वाविंशतिःपर्वेशाः तेसप्ततष्टाःएकः
चक्रतुल्यएवभवति अतश्चक्रयुतइति पर्वेशाःसप्तअतःसप्ततष्टइत्युपपन्नं नन्वत्रचक्राङ्कोत्पन्नपर्वेशस्ययोजितत्वात्पूर्वंचक्र
ध्रुवयोगोनोपपद्यतइतिचेद्भ्रांतोसि नह्येकचक्रेनिरवयवैकादशभगणायेनचक्रोत्थपर्वेशयोगेचक्रध्रुवयोगोनर्थकः

स्यात् किंत्वेतावान्भगणादिर्व्यंगुः ११।७।१।१२तत्रराश्यादिरयंध्रुवः ७।१।१२ चक्रघ्नःपूर्वयोजितः इदानींचक्रघ्नेकाद
शयोज्याः आचार्येणत्वेकादशोत्थपर्वेशएकचक्रघ्नःपर्वेशेयोजितस्तदपियुक्तमेव नन्वेवंग्रंथादिजव्यगुभगणानांतदुत्पन्न
पर्वेशस्यवायोजनैःप्रसज्येत बाढंतदुत्थपर्वेशइतिवराहोक्तेर्मासशब्दस्यचांद्रेमुख्यत्वात् चंद्रवर्षेद्वौपर्वेशाविति गम्यते नपु
नरेकस्मिन्भगणइति नचैकवर्षेव्यगुभगणोप्येकइतिवाच्यं गणेनाधिक्यदर्शनात् अतएवभगणेपर्वेशद्वयंनयुक्तमितिचेद
त्रब्रूमः "ब्रह्मेंदुशक्रवृत्तेशवरुणाग्नियमाःक्रमात्॥फणीनभगणैक्यघ्नद्विमितिग्रहणाधिपा" इतिब्रह्मसिद्धांतोक्तिश्रवणादे

तिथिरविहतिरंशास्तद्युतोर्कोविधुःस्यादथजिन २४ गुणहारोद्व्यंगयुक्तद्गतिःस्यात् ॥
खचरशरकलास्मात्सूर्यभुक्तिस्ततःस्युर्भयुतिजगतगम्यानाडिकास्तिथ्यपायात् ॥ १९ ॥

कभगणेद्वौपर्वेशावित्येवयुक्तं वाराहोक्तिर्यथाकथंचिन्नेयेतिविस्तरभयाद्विरराम॥१८॥अथसूर्याचंद्रंसाधयति द्वादशगु
ण्यातिथिसंख्याभागाःस्युः तैर्भागैःयुतःअर्कःविधुश्चंद्रःस्यात् अथजिनैश्चतुर्विंशत्यागुण्यतेसतथाएवंभूतोहारःद्व्यंगैःद्वि
षष्ट्यायुक्तस्यचंद्रस्यगतिःस्यात् खचरशराःएकोनषष्टिकलाःसूर्यस्यभुक्तिर्गतिःस्यात् सूर्यचंद्राभ्यांभयुतिजाःनक्षत्रयोग
जाःगतगम्याःघटिकास्तिथेरपायात्अंतात्स्युः नसूर्योदयात् तयोरविचंद्रौतिथ्यंतकालीनौतास्तिथिघटीसंस्कृताः सूर्योद
यान्नक्षत्रयोगघटिकाःस्युरित्यर्थः अत्रोपपत्तिः सूर्यचंद्रांतरेद्वादशभागतुल्येएकातिथिर्भवति अतोद्वादशगुणातिथिःसूर्य
चंद्रांतरभागाःतैरवौयावत्क्षिप्यंतेतावच्चंद्रोभवति अत्रगत्यंतरंचतुर्विंशतिभक्तंहारःकृतोस्ति अतोगुणजिनोहारःगत्यं

तरं तत्रसूर्यगतिर्योज्याचंद्रगतिःस्यादित्यत्रद्वयंगमितासूर्यगतिःप्रकल्पिता अतोव्यंगयुगित्युपपन्नम्॥ १९॥दैवज्ञवर्यस्य दिवाकरस्यसुतेनमल्लारिसमाह्वयेन ॥ वृत्तौकृतायांग्रहलाघवस्यमासौघतःपर्वयुगंसमाप्तम् ॥ १ ॥ इतिश्रीगणेशदैवज्ञकृतग्रहलाघवस्यटीकायांमल्लारिदैवज्ञविरचितायांमासगणादेवग्रहणद्वयसाधनाधिकारःसप्तमः ॥ ७ ॥

अथकेवलंपंचांगादेवलघुकर्मणाग्रहणद्वयंसाधयति अथवायंपर्वांतोदर्शांतःपौर्णमास्यंतश्चरविःसूर्यस्तमोराहुस्तिथेर्वा

अथवायंतिथिपत्रतोपगम्यःपर्वांतश्चरविस्तमस्तिथेर्वा ॥<br>
भस्यैतैष्यघटीयुतिर्द्युमानंतेभ्योथग्रहणद्वयंप्रवच्मि ॥ १ ॥<br>
ताराषड्व्यगतिथियातगम्यनाडीयोगाप्ताव्यगुरविदोर्लवोनितास्ते ॥<br>
संयुक्तानिजदलभूपभागकाभ्यांछन्नेवांगुलवदनंभवेत्सुधांशोः ॥ २ ॥

भस्यैतैष्यघटीयुतिःगतैष्यघटीयोगश्चज्ञेयः तिथिपत्रस्थंद्युमानमपिज्ञेयं तेभ्योज्ञानेभ्यःग्रहणद्वयंप्रवच्मीत्यर्थः ॥ १ ॥ अथच्छन्नसाधनमाह सप्तविंशत्यधिकषट्शतमिताःविगताःअगाःसप्तयस्मात्सतथाएवंभूतोयस्तिथेर्यातगम्यनाडीयोगस्तेनआप्ताःभक्ताःलब्धंनिष्ठंग्राह्यंततस्तेलब्धांशाःव्यगुरवेःविराहुर्कस्ययेदोर्लवाःभुजभागास्तैःऊनितास्तेनिजेनस्वीयेनदलेनअर्धेनतथास्वस्यभूपभागेनषोडशांशेनचलब्धद्वयेनयुक्ताःसंतोअंगुलपूर्वकंविधोश्चंद्रस्यच्छन्नंग्रासोभवेदित्यर्थः अस्योपपत्तिः चंद्रस्यमध्यमंमानैक्यखंडमिदं १८ । ५६ तिथिघटिका ५० । ४ श्चमध्यमाःमध्यमरविचंद्रगत्यंतरोत्प

न्नाः तत्रगतेराधिक्येमानैक्यखण्डाधिक्यंतत्रतिथिघटीनामल्पत्वं तत्रानुपातः यदिमध्यमतिथिघटीभिर्मध्यमंमानैक्य खंडंतद्देष्टस्पष्टतिथिघटीभिःकिं अत्रव्यस्तत्रैराशिकेस्पष्टतिथिघटिकाहरःमध्यमतिथिघटीमध्यममानैक्यखंडघातोभा ज्यः११।१९।८ अत्रास्मिन्भाज्येभागकरणार्थंसप्तगुणंभवभक्तेजाताभागाः ७१२।११ एतेतिथिघटीयोगेनभा ज्याइत्यत्रतेषांसावयवत्वार्थंसंचारगुणनं यद्यासुघटीषु ५९।४ अयंभाज्यः ७१२।११ तदासप्तोनितास्वासुघटीषु ५२ कोभाज्यइति जाताः ६।२७ अतएतेव्यगतिथिगतैष्यघटीयोगेनभाज्याः व्यगुभुजांशोनाःततःशरार्थंस्वदलयु

अंगयुक्तिथिघटीहृतबाणांकर्तवोंऽगुलमुखंविधुबिंबम् ॥
दिग्वियुक्तिथिघटीहृतदृग्दृक्त्रींदवोंऽगुलमुखाक्षितिभास्यात् ॥ ३ ॥

क्ताभागाःस्थूलःशरइत्यतोभूपभागान्विताःकृताः तच्छन्नंभवतीत्युपपन्नम् ॥२॥ अथचंद्रबिंबभूभाबिंबेकथयति षड्यु क्ततिथिगतैष्यघटीयोगेनभक्ताःपंचानसप्तशतमिताःसंतः अंगुलमुखंविधोश्चंद्रस्यबिंबंस्यात् दिग्भिर्वियुजोहीनाःयास्ति थिघटिकास्ताभिर्हृताःदृग्दृक्त्रींदवःद्वाविंशत्यधिकत्रयोदशशतमिताःअंगुलमुखाक्षितिभाभूछायास्यादितिव्याख्या अ त्रोपपत्तिः अत्रमध्यतिथ्यानया ५९।४ मध्यमेचंद्रबिंबेस्मिन् १०।४१ गुणितेभाज्यः६३१।२अयंसावयवोतःसंचारः यद्यासुघटीषु५९।४अयं६३१।२तदाषड्युक्तघटीषुकइति जातोभाज्यः६९।५अयंतिथिघटीभिःषड्युक्ताभिःभाज्यश्चं द्रबिंबंभवतीत्युपपन्नं अथमध्यमंभूभाबिंबमिदं २६।५५ अस्मिन्मध्यतिथिगुणितेजातोभाज्यःसावयवः अत्रसंचारः

यद्याभिर्घटीभिः ५९।४ अयंभाज्यः १५९२।४९ तदादशहीनघटीनां ४९।४ कोभाज्यइति जातः १३२२ अतोदशहीन तिथिघटीभक्तोभाज्यःभूभास्यादित्युपपन्नम्॥ ३॥ अथनक्षत्रघटीभ्योग्रासानयनमाह विगताःदशयाभ्यःएवंविधाउडुघट्योनक्षत्रगतैष्यघटीयोगःताभिर्हताःखषड्दशाधिकभूषट्शवमितास्तेव्यगोःविराहोर्भास्वतःसूर्यस्ययेभुजभागास्तैरूनिताःकार्याः ततःशितिकंठैरेकादशभिर्हतागुणितास्तुरंगैःसप्तभिर्भक्ताअंगुलपूर्वकंविधोःस्थगितंछन्नंप्रकारांतरेणस्यादित्य

विदशोडुघटीहताःखभूषड्व्यगुभास्वद्भुजभागवर्जितास्ते ॥
शिशिकंठहतास्तुरंगभक्ताःस्थगितंचांगुलपूर्वकंविधोःस्यात् ॥ ४ ॥
भगतागतनाडिकैक्यभक्तानववेदर्तवइंदुबिंबमुक्तम् ॥
विमनूडुघटीहताःशराक्षद्विभुवःस्यात्क्षितिभांगुलादिकावा ॥ ५ ॥

र्थः अत्रोपपत्तिः मध्यमनक्षत्रघटीभिराभिः ६०।५२ भाज्यादिकृत्वातिथिवदंकाउत्पादनीयाः सुगममिदम्॥ ४॥ अथनक्षत्रघटीभ्यश्चंद्रबिंबभूभाबिंबेकथयति भस्यनक्षत्रस्ययःगतागतनाडीयोगःगतैष्यघटीयोगःतेनभक्ताःनववेदर्तवःएकोनपंचाशदधिकषट्शतमिताःयल्लब्धंतदंगुलाद्यंचंद्रबिंबमुक्तं तथैवविगताःमनवश्चतुर्दशयाभ्यस्तास्तथाएवंविधाःयाःउडुनाड्यःनक्षत्रघटिकाःताभिर्हताःशराक्षद्विभुवःपंचपंचाशदधिकद्वादशशतमिताः अंगुलमुखाक्षितिभाभूछायास्यादिति अ

त्रोपपत्तिस्तिथिवत्सुगमा ॥ ५ ॥ अथसूर्यग्रहणेग्रासंसाधयति सप्तत्यधिकशतमितातिथिघटीहृताःततस्तेसवेदाश्चतु र्भिर्युताः तेव्यगुस्फुटलवैरमांतनतनाडिकांघ्रिरहिताद्युतादित्यादिनाकृतैः हीनास्ततोभवगुणाएकादशगुणाःशैलैःसप्त भिःहृताःखररुचःसूर्यस्यस्थगितांगुलानिग्रासांगुलानिस्युः अथवाउडुनाडिभिःहृताःदेवयमास्त्रयस्त्रिंशदधिकशतद्वय मितास्तेसरामाःत्रियुक्ताः ततोव्यगुस्फुटभुजभागहीनास्तेएकादशगुणाःसप्तभक्ताःग्रासःस्यादित्यर्थः अत्रोपपत्तिः अ

खात्यष्टयस्तिथिघटीविहृताःसवेदावाथोडुनाडिहृतदेवयमाःसरामाः ॥
हीनाव्यगुस्फुटलवैर्भवसंगुणास्तेशैलोद्धृताःखररुचःस्थगितांगुलानि ॥ ६ ॥
रविलवयुतभानोर्दोर्लवत्र्यंशतुल्यैर्विरसलवमहेशाव्यंगुलैर्हीनयुक्ताः ॥
अजधटरसभेर्केबिंबमस्यांगुलाद्यंस्थितिमुखमवशिष्टंपूर्ववच्छेषमत्र ॥ ७ ॥

त्रसूर्यस्येदंमध्यमंमानैक्यखंडं१०।४७ इदंसप्तगुणंएकादशभक्तं जाताःभागाः६।५२ एभ्यःसुखार्थंचत्वारस्त्य क्ताः शेषं२।५२ इदंमध्यतिथिघटीगुणितंजातोभाज्यः१७० अतःखात्यष्टयस्तिथिघटीविहृताःसवेदाइत्युपपन्नं तथै वैभ्यःभागेभ्यःत्रीन्त्यक्त्वाशेषंमध्यनक्षत्रघटीभिः६०।४७ गुणितंजातोभाज्यः२३३ अतोनक्षत्रघटीभक्तदेवयमाः सरामाइति एवंजातामानैक्यखंडोत्थभागाःव्यगुभुजांशैर्हीनाः शेषेअंगुलीकरणार्थंभवगुणेशैलभक्तेग्रासःस्यादितिसुग मम् ॥ ६ ॥ अथसूर्यबिंबसाधनमेकवृत्तेनाह रविलवयुतभानोरिति रविलवैर्द्वादशभागैर्युतोयोभानुस्तस्ययेदोर्लवाः

भुजभागाःतेषांयःत्र्यंशःततुल्यानियानिव्यंगुलानितैःविरसलवाःविगतषडंशाःमहेशाः १०।५० हीनयुक्ताःकार्याः कदे
त्याह अर्केसूर्येअजधटरसभेसतिमेषादिषङ्गेहीनाः तुलादिषङ्गेयुक्तास्तदस्यसूर्यस्यअंगुलाद्यंबिंबंभवति अत्रस्थितिमर्दस्प
र्शकालादिकंयदवशिष्टंउक्तात्उर्वरितंतदत्रपूर्ववत्ग्रहणोक्तवज्ज्ञेयमित्यर्थः अत्रोपपत्तिः रविबिंबमध्यममिदं१०।५०
इदंमध्यमगतिवशात्स्पष्टगतेःसाध्यं मध्यमस्पष्टगत्योंतरगतिफलंतत्सूर्यमंदकेंद्रकोटिवशात् अतोमंदकेंद्रंकार्यं तद्यथा र
वेर्मंदूच्चंराशिद्वयमष्टादशभागाधिकं २।१८।०।० ततूरवेःशोध्यंकेंद्रंस्यात् अस्माद्रविःशोध्यः तस्यभुजस्त्रिभाच्छोध्यः
कोटिःस्यादित्यत्रद्वादशभागयुक्तसूर्यस्यभुजोहिमंदकेंद्रेकोटिर्भवतीतिसिद्धं तस्यसत्रिभस्यभुजएककोटिःअतस्त्रिभस्य

## इतिश्रीगणेशदैवज्ञविरचितस्यग्रहलाघवस्यटीकायां

## तिथिपत्रादिवग्रहणद्वयसाधनाधिकारोऽष्टमः ॥ ८ ॥

३ सूर्योच्चस्थानंतरंद्वादशभागास्तेरवौयोज्यास्ततोभुजःकार्यइतिसिद्धं अत्रमध्यमस्पष्टसूर्यबिंबांतरमिदंपरम ३०मंगु
लाद्यं इदंपरमाणंनवत्यंशानांअंशतुल्यं अतोद्वादशभागयुक्तसूर्यभुजभागत्र्यंशतुल्यव्यंगुलहीनयुक्तंमध्यबिंबंस्पष्टंभव
तीति मेषादौरवौसतिकेंद्रंमकरादौभवति तत्रगतिफलंऋणमतोमेषादौहीनातुलादौरवौकेंद्रंकर्कादौ तत्रगतिफलंधन
मतस्तुलादौयुक्ताःकार्याइत्युपपन्नम् ॥ ७ ॥ दैवज्ञवर्यस्यदिवाकरस्यसुतेनमल्लारिसमाह्वयेन ॥ वृत्तौकृतायांग्रहला
घवस्यपंचांगतःपर्वयुगंसमाप्तम् ॥ १ ॥ इतिश्रीगणेशदैवज्ञविरचितस्यग्रहलाघवस्यटीकायांमल्लारिदैवज्ञविरचितायां
तिथिपत्रादिवग्रहणद्वयसाधनाधिकारोऽष्टमःसमाप्तः ॥ ८ ॥ ॥ ॥

अथोदयास्ताधिकारोव्याख्यायते तत्रादौशुक्लप्रतिपदिचंद्रदर्शनंभविष्यतिनवेत्युच्यतेवृत्तत्रयेण इहपक्षतेःप्रतिपदः
क्षयेअंतेअर्कव्यग्वर्कौसूर्यविराह्वर्कौसार्कांशौद्वादशभागयुक्तौकुरु अथकेवलात्अदत्तायनांशात्व्यगोश्चरंसाध्यं तत्
षड्बाणैःषट्पंचाशद्भिःविहृतंभक्तंसह्ववाद्यंफलंग्राह्यं तत्स्वर्णधनर्णंस्यात् कदेत्याह व्यगुरवेर्विराह्वर्कस्ययौगोलौतद्वशात्
उत्तरगोलेधनंदक्षिणगोलेऋणमिति तत्फलंपृथक्एकांतेस्थापयेत् ॥१॥ त्रिभेणराशित्रयेणअयनलवैरयनांशैःअन्वितः

सार्कांशाविहकुरुपक्षतिक्षयेर्कव्यग्वर्कौचरमथकेवलाद्व्यगोर्यत् ॥
षड्बाणैर्विहृतमिदंक्रमाह्ववाद्यंस्वर्णंस्याद्व्यगुरविगोलयोःपृथक्तत् ॥ १ ॥
त्रिभायनलवान्वितारुणचराहतंद्व्यक्षभाहतेःकृतिहृतंधनर्णमसमैकगोलेव्यगोः ॥
खखानलविशेषितःसरसभायनार्कोदयःशरद्विकहृतोधनाधनमनल्पकाल्पोदये ॥२॥

युक्तःयःअरुणःसूर्यःतस्ययच्चरंतेनपृथक्स्थंफलंआह तंगुणितंततोद्व्यक्षभाहतेःद्विगुणितफलभायाःकृत्यावर्गेणहृतं तत्
द्वितीयंफलंएकांतेस्थाप्यं तद्व्यगोःअसमैकगोलेधनर्णंस्यात् रविव्यगूयदिभिन्नगोलेतदाधनंएकगोलेतदाऋणमिति अ
थसरसभायनार्कोदयःषड्राश्ययनांशयुक्तार्कोदयःखखानलविशेषितःशतत्रयांतरितःसन्शरद्विकैःपंचविंशत्याहृतःफलं
अनल्पकाल्पेऽर्कोदयेसतिधनाधनंस्यात् शतत्रयात्उदयेअधिकेधनंऊनेऋणं इदंतृतीयमप्येकांतेस्थाप्यम् ॥ २ ॥

अथचतुर्थफलंसाधयति द्युमितिर्दिनमानंप्रतिपदंतः अनयोर्यदंतरंतच्छरभक्तंफलंदिनेअधिकोनेस्वमृणंस्यात् दिनमा नेतिथेरधिकेधनं ऊनेऋणमितिचतुर्थफलंभवति अत्रचतुष्कसंस्कृति फलचतुष्टयसंस्कारश्चेद्धनं तदातपनस्यसूर्यस्यास्ते विधुश्चंद्रःईक्षतेदृश्यते अन्यथाफलसंस्कारेऋणेसतिनदृश्यतेइतिभावः संस्कारस्तुधनयोर्योगःऋणयोरपियोगःधनर्णयो रंतरमितिप्रसिद्धः अत्रोपपत्तिः चंद्रस्यकालांशाःद्वादशयदास्युस्तदाचंद्रोदयः चेदल्पास्तदानेति अतश्चंद्रेदृक्कर्मादिदत्त्वा कालांशाःसाध्याः तत्राचार्येणलाघवार्थंशिष्यक्लेशभयार्थंफलानिसाधितानि तेषांयोगेयदाधनंतदाकालांशाःद्वादशा

द्युमितिप्रतिपद्गमांतरंयच्छरभक्तंस्वमृणंदिनेधिकोने ॥
धनमत्रचतुष्कसंस्कृतिश्चेत्तपनास्तेविधुरीक्ष्यतेन्यथान ॥ ३ ॥

धिकाः अतउदयोभविष्यत्येव यदाऋणंतदाकालांशाःद्वादशकल्पाः अतोनदर्शनं सूर्यचंद्रांतरंप्रतिपदंतेद्वादशभागास्तेतु क्षेत्रांशाःनित्यांशाःनित्याएवकालांशाःदेशविशेषेणकालवशेनशराद्यंतरवशेनचांतरिताभवंति तत्रप्रतिपदंतेचंद्रःकार्यः अतोरविःसार्कांशश्चंद्रोजातः तयाशरार्थंव्यगुचंद्रःकार्यः अतोव्यगुरविरेवसार्कांशोव्यगुचंद्रःस्यात् अतःसार्कांशावि त्युपपन्नं अथाक्षदृक्कर्मसाध्यं तत्रादौव्यगोःशरःसाध्यः ततःद्वादशकोटौपलभाभुजःतदाशरकोटौकइति जातं दृक्कर्म तत्रलाघवार्थंप्रतिराशिराशित्रयमध्येशराःसाधिताः तेयथा १३५।२३४।२७० एतेद्वादशभक्ताजाताः ११।१९। २२।३० एषांपलभागुणोस्ति एतेएकांगुलपलभोत्थचरखंडैरेभिःआसन्नासति १०।१८।२१।२० एतानिचरखंडानि

यावत्पलभयागुण्यंतेतावत्स्वदेशीयान्येवभवंति तश्चरखंडकैःव्यगोःसाधितं यच्चरंतत्पलभागुणितशरासन्नंस्यादेव
द्वादशभिस्तुपूर्वमेवभक्तमस्ति अतोव्यगोश्चरंदृक्कर्मकलाःतासांभागकरणार्थंषष्टिर्हरः६० परमिदंसांतरंतदंतरंसाध्य
ते यद्घनेनपरमचरखंडकेन २१।२० एताःपरमदृक्कर्मखंडकलाः २२।३० तदेष्टेनचरेणकाइति एवंहरघातोहरः१२
८० गुणहरौगुणेनापवर्त्यजातोहरः५६ अतोव्यगोश्चरंषड्बाणैर्हृतंभागाद्यमाक्षंदृक्कर्मभवतीत्युपपन्नं धनर्णोपप
त्तिः उत्तरगोलेग्रहःक्षितिजादुन्नाम्यते अतस्तदुदयःपूर्वमेव अतस्तत्रधनं दक्षिणेनाम्यतेतस्तदुदयःपश्चात्अतस्तत्रऋण
मेकंफलं अथायनदृक्कर्मसाधयति त्रिज्याकर्णेआयनवलनज्याभुजस्तदाशरकर्णेकइति द्युज्यावृत्तेइदंतदात्रिज्यावृ
त्तेकिं त्रिज्ययोस्तुल्यत्वान्नाशेकृतेद्युज्याहरःशरोगुणः तत्रसायनसत्रिभग्रहक्रांतिरेवायनवलनं तत्प्रतिराशिसाधितं
११ २० २४
४३।८।० एतदप्येकांगुलपलभोत्थचरार्द्धासन्नंभागार्थंषष्ट्याभाज्यं६० यदास्यचरार्धस्य१०इदंवलनं११।४३ तदे
ष्टस्यकिमिति हरघातोहरः६०० मध्यस्थद्युज्या११२।३० इयमपिहरः अतोहरघातोजातोहरः६७५०० जी
वार्थंद्वौ२ गुणः पूर्वगुणश्च११।४३ एवंसत्रिभायनार्कस्यैकांगुलपलभोत्थचरंग्राह्यं तदिष्टपलभावशेनगृहीतं अतस्त
स्याक्षभापिहरःशरोगुणोस्तितदर्थंशरःसाध्यः तदाक्षदृक्कर्मतोविलोमेनशरःतत्षष्टिद्वादशघातः७२० गुणंपलभाभक्तं
शरःस्यात् उभयोर्घातेपलभावर्गोहरः अयंचहरः ६७५०० सत्रिभायनार्कचराक्षदृक्कर्मघातस्यगुणघातोगुणः१६
८७२गुणहरौगुणेनापवर्त्यजातोहरः४।० चतुर्भिःपलभावर्गोपिहरः एवंहरघातोद्यक्ष४भाहतेःकृतिर्हरःरूपगुणस्याविकृ
तान्नाशः धनर्णोपपत्तिःप्रत्यक्षंगोलेदृश्यते इदंद्वितीयफलं अथक्षेत्रांशकालांशांतरंसाध्यं तत्रराशिकलोदयास्वंतरंकार्यं

अत्रोदयपलान्यतःराशिकलाःषड्भक्ताः३००एतदंतरं तत्रसूर्यास्तेचंद्रोदयोनःसूर्यःषड्भायनःकार्यः तदुदयःस्वस्वानलविशे षितः कलास्वंतरस्यविंशत्यंशैरिदमंतरं तदाद्वादशभिःक्षेत्रांशैःकिमिति हरः ३० गुणः १२ षष्टिभक्तंघटिकाःताःषड्भाः भागाः एवंहरघातोहरः१८००गुणघातोगुणः७२ गुणहरौगुणेनापवर्त्यहरः२५ अतःशरद्विकहृतइतिधनर्णोपपत्तिः श तत्रयादधिकेउदयेकलाभ्यःअसवोऽधिकाः ततस्तत्रधनंऊनेऋणमिति इदंतृतीयफलं प्रतिपदंतेसूर्यास्तेचंद्रोदयः अतोद्यु मानतुल्यप्रतिपदंतेचंद्रोदयः ऊनाधिकात्फलंसाध्यते षष्टिघटिकाभिर्द्वादशभागास्तदेष्टदिनमानप्रतिपदंतरघटीभिःकि

चक्राढ्योमधुवक्रमासनिचयोविश्वाप्तचक्रोनितोद्विघ्नोयुग्दशमास
धूर्जटिदिनैर्भैःशेषितोभच्युतः ॥ द्व्याप्तःस्याद्गमुखःपृथक्तिथिलवैरूनोस्य
वाह्वंशकार्काप्तांशोनयुतोघटाजरसभेमासादिकःस्यान्मधोः ॥ ४ ॥

मिति गुणहरौगुणेनापवर्त्यहरः ५ अतःशरभक्तमितिधनर्णोपपत्तिः प्रतिपदधिकेदिनेचंद्रोदयःस्यादेव अतस्तत्रधनं ऊने ऋणमित्यर्थतएवसिद्धं एवंचतुर्णांफलानांसंस्कारेधनभूतेकालांशाःद्वादशाधिकाःस्युः तदातत्रचंद्रोदयःस्यादित्युपपन्नं अन्यथानैवेति अथझटितिसभायांगुरुशुक्रोदयास्तज्ञानंयथाभवतितथोच्यते तत्रादौगुरोरुदयास्तौसार्धश्लोकेनकथय ति॥ ३॥ ‘तिथिदिनरहिताद्यो सौद्विधातैश्चमासैःक्रमशइहभवेतामत्रिणोस्तोदयौच ’॥मधुवक्रेचैत्रादौयःमासगणोभवति

सतद्वर्षीयचक्रेणआढ्योयुक्तःकार्यः सएवविश्वाप्तेनत्रयोदशभक्तेनचक्रेणऊनितः ततोसौद्वाभ्यांहन्यतेगुण्यतेसतथा
ततःदशभिर्मासैर्धूर्जटिभिरेकादशदिनैर्युक्तयुक्तःसन्ऊर्ध्वस्थानेभैःसप्तविंशत्याशेषितः भक्तोवंरितःततोभच्युतः सप्तविंश
तेःशोध्यःसन्नक्षत्रात्मकोऽयाप्तःसन्भमुखोराश्यादिःस्यात् राश्यादिःपृथक्अन्यस्थलेस्थाप्यः तत्रतिथिलवैःपंचदशभा
गैःऊनः अस्यपंचदशभागोनस्ययोवाहुर्भुजस्तस्ययेंशकाःभागाःतेभ्यःअर्कैर्द्वादशभिःआप्तांशाःलब्धाःभागास्तैर्भागैः
पृथक्स्थोराश्यादिकःऊनयुतःकार्यः कदेत्यतआह घटाजरसभेसतितुलादिषड्भस्थेराश्यादिकेसतिफलं तत्रैवऋणंकार्यं
मेषादिषड्भस्थेधनंकार्यं सराश्यादिरेवमधोश्चैत्रमारभ्यमासादिकःस्यात् यावंतोराशयस्तावंतोमासाः भागाःदिनानि क
लाःघटिकाःविकलाःपलानीति तिथिदिनरहिताद्यइति अयंमासादिकोद्विधास्थानद्वयेस्थाप्यः ततःएकस्थानेप्रथमंति
थिदिनैःपंचदशदिवसैःरहितःकार्यः तत्रतैःसावयवैर्मासैश्चैत्राद्गुरोरस्तःस्यात् तथाद्वितीयस्थानेपंचदशयुक्तैस्तैर्मासैश्चैत्रा
देवगुरोरुदयःस्यात् अत्रोपपत्तिः वर्षादौगुरुःसाध्यःसस्पष्टःकार्यः तथारविस्तत्रवर्षादौशून्यं अतोगुरुरेवशीघ्रकेंद्रं यो
हिगुरुःराश्यादिःसमासादिकःकृतःसयथा चैत्रादौमासगणस्ततोगुरुःसार्धविश्वमासैर्गुरूदयास्तकालःशुद्धोभवति अतो
मासगणःसार्द्धविश्वैर्भाज्यः अतएवद्विघ्नोमासगणोभैःशेषितइति अत्रचक्रोत्थमासगणेसार्धविश्वभक्तेयच्छेषंतदप्यत्रयो
ज्यं एवमेवचक्रेमासगणः१२८अयंसार्धविश्वभक्तः शेषंसार्धाःषट्६।३०एकचक्रेइदंतदेष्टचक्रैःकिमिति चक्रस्थगुणः
६।३०गणगुणितचक्रंसार्धविश्वभक्तेमासगणेयोज्यमित्यत्रद्विगुणाःकृत्वाप्रथममेवयोजिताः तेतुचक्रतुल्याएव अतश्च
क्राढ्यइति इदंसांतरंयतःसार्धविश्वेस्तुंपूर्णानभवंति अतोविश्वाप्तचक्रोनितइतिग्रंथारंभेगुरोर्मासादिक्षेपः२०।११अत

उक्तं दशमासधूर्जटिदिनैर्युगिति अग्रेकदोदयास्तःस्यात् अतोभोग्यार्थंभच्युतःद्विगुणत्वाद्द्वयास्तइति अस्यकालांशांत
रेसूर्योंतःपंचदशभागोनःकृतस्तस्मात्फलंसाध्यं अतस्तद्भुजभागार्कलवोनयुक्तःकार्यइति यतःपरमभुजांशानां९०द्वा
दशांशः ७ । ३० सूर्यमंदफलगुरुमंदफलयोःपरमयोर्योगासन्नोभवति समासादिकःयावत्पंचदशदिनैरूनाधिकःक्रि
यतेतावत् गुरूदयास्तयोरंतरंत्रिंशद्दिनात्मकमेवभवति अतस्तैर्मासैश्चैत्राद्गुरोरस्तोदयौभवतइतिशोभनमुक्तम् ॥ ४ ॥

अथमधुमुखमासाःसप्तभूनिघ्नचक्रैःस्वशरयुग ४५ लवाढ्यैःसंयुतामार्गणघ्नाः ॥
उदधिरससमेताश्छिद्रखेगामितष्टानवनवपरिशुद्धाःपंचभक्ताःपृथक्स्थाः ॥
रसगुणदिनहीनाढ्याद्विधाचैत्रतस्तैर्भृगुजहरिदिगस्तांभूदयौस्तःक्रमेण ॥ ५ ॥
नवमासभघ्नस्तोल्पपुष्टाःपृथगास्थाःक्रमशस्तुतैर्युतोनाः ॥
द्वेधायुगवासरोनयुक्तास्तोयास्तैंद्युदयौक्रमाद्भृगोःस्तः ॥ ६ ॥

अथगुरूदयास्तकथनानंतरंशुक्रास्तोदयौसार्धवृत्तद्वयेनकथयति मधुमुखमासाश्चैत्रादौयोमासगणस्तेमासाःसप्तभूभि
र्निघ्नानिगुणितानियानिचक्राणि ततस्तानिस्वशरयुगलवेनपंचचत्वारिंशदंशेनआढ्यानियुक्तानितैःसंयुतास्ततोमार्ग
णघ्नाःपंचगुणाः ततःउदधिरसैःचतुःषष्ट्यासमेताः ततश्छिद्राणिनवखेगामिनोग्रहाःनव एवंनवनवतितष्टाःशेषाःनवन
वभ्यःपरिशुद्धाः तच्छेषाःपंचभक्ताःपृथक्स्थाःकार्याः येपृथक्स्थास्तेपिस्थानद्वयेस्थाप्याः एकत्ररसगुणदिनैःषट्त्रिंश

द्विनैः हीनाः अन्यत्र युक्ताः चैत्रतः तैर्मासैर्यथाक्रमं भृगुजस्य शुक्रस्य हरिदिशि पूर्वस्यामस्तः अंबुनि पश्चिमायामुदयः भवेत् ततस्ते पृथक्स्थाः तेनवमासाभघस्त्रतः सप्तविंशतिदिनाधिकनवमासेभ्यश्चेत् अल्पाः पुष्टा वा स्युस्तदा क्रमशः तैर्नवमासभघस्त्रैः युतोनाः कार्याः ततस्ते द्वेधा युगवासरैश्चतुर्भिर्दिनैः ऊनयुक्ताः क्रमात् भृगोः शुक्रस्य तोयास्तः पश्चिमास्तः ऐंद्र्युदयः पूर्वोदयः एतौ चैत्रातैर्मासैस्तइत्यर्थः अत्रोपपत्तिर्गुरूदयास्तवत्सुगमा अथगुरुशुक्रयोरुदयास्तकालपरिवर्तमाह

मासैर्नखैर्व्यरिदिनैरुदयास्तकालः शुक्रस्य शुध्यति गुरोर्यदि सार्धविश्वैः ॥
सोन्यो भवेन्मधुमुखादथ तैर्युतश्चेत्स्यात्तत्परोथ पुरतोपि विलोमशुद्ध्या ॥ ७ ॥

॥ ५ ॥ ६ ॥ शुक्रस्य उदयास्तकालः पूर्वास्तपूर्वोदयपश्चिमास्तपश्चिमोदयपरिवर्तः व्यरिदिनैः षड्दिनरहितैः नखैर्विंशतिमासैः शुध्यति संपूर्णो भवति गुरोः सार्धविश्वैर्मासैः शुध्यति मधुमुखाच्चैत्रादेः तैर्युतश्चेत्तदान्यः स्यात् विलोमशुद्ध्या पुरतोपि पूर्वमेव तैः स्वमासैरुदयास्तः स्यात् एतदुक्तं भवति यस्योदयास्तयोः मासादिकश्चैत्रादितः कालः स एभिः परिवर्तमासैर्युक्तः तैरेव मासैश्चैत्रादिः स एवोदयास्तः स्याच्चेन्न्यूनीकृतस्तदा तैर्मासैश्चैत्रादेः पूर्ववदुदयास्तः स्यादित्यर्थः अत्रो

पपत्तिःप्रत्यक्षसिद्धासुगमा ॥ ७ ॥ अथचंद्रशरंसाधयति व्यगुचंद्रस्यविराहुचंद्रस्यदोर्गृहेभुजराशौप्रथमेसतिअंशाः भागाःस्वदलेनसार्धेनआढ्याःयुक्ताःकार्याः सोंगुलादिकःशरःस्यात् अपरेद्वितीयराशौयेभागास्तेनगाब्धिभिःसप्तचत्वारिंशतायुक्ताःकार्याः सशरःस्यात् चरमेतृतीयराशौभागास्तेदलिताः ततोनगाद्रिभिःसप्तसप्तत्यायुक्ताव्यगुविधुदिग् विराहुचंद्रोयस्मिन्गोलेतद्दिक्शरोभवतीत्यर्थः अत्रशरानयनेराशीनामंशाःनकार्याः अधस्तनायथावस्थिताएवभागाः

प्रथमेव्यगुचंद्रदोर्गृहेंशाःस्वदलाढ्यास्त्वपरेनगाब्धियुक्ताः ॥
चरमेदलितानगाद्रियुक्ताव्यगुविधुदिग्विशिखोंगुलादिकःस्यात् ॥ ८ ॥
नृपतिथिमनुविश्वरुद्रगोद्रिश्रुतिवसुधाः १६।१५।१४।१३।११।९।७।४।१शरखंडकानितैर्यत्॥व्यगुविधुभुजतोपमौक्तिवद्वाव्यगुविधुदिग्विशिखोंगुलादिकःस्यात् ॥९ ॥

ग्राह्याः अत्रोपपत्तिः प्रथमराशौभागाःस्वार्धयुक्ताःशरोभवतीतिपूर्वमेवग्रहणेयुक्तिःप्रतिपादितास्ति द्वितीयराश्यंते शरः ७७ अत्रप्रथमराश्यंतेशरः ४७ अतोद्वितीयराश्यादितोयेभागास्तैर्युक्तः ४७ एतेशरोभवत्येव तथैवतृतीयराश्यादेर्भागाःदलिता द्वितीयराश्यंतरेणानेन ७७ युक्ताःशरःस्यादेवेतियुक्तमुक्तं पूर्वंग्रहणेचंद्रशरउक्तः स्वत्रिंशदल्पभुजभागमध्यस्थएव अन्यत्रवहुपुभुजभागेषुबह्वंतरितःस्यात् अतःउदयास्तशृंगोन्नतिग्रहयोगादिविधावनेनप्रकारेणशरः कार्यःनपूर्वेणेति ॥ ८ ॥ इदानींखंडकैःसूक्ष्ममप्याह व्यगुचंद्रभुजांशदशांशमितखंडैक्यंशेषंभोग्यखंडाहतिदशांशयु

क्रंसदंगुलादिकःशरःस्यादित्यर्थः उपपत्तिरत्रातिस्फुटा ॥ ९ ॥ अथग्रहाणांपूर्वपश्चिमदिशोरुदयास्तकारणमाह यो ग्रहःइनात्सूर्यात्लघुगःअल्पगतिः अल्पश्चभागैरपिन्यूनःसपूर्वस्यांउदयंप्राप्नोति यःग्रहःभूयान्सूर्यापेक्षयाभागैरधिकः भूरिगतिःसूर्याधिकगतिश्चसःप्रतीच्यांपश्चिमायांउदेतिउदयंप्राप्नोति यःभूयान्सूर्यादधिकभागोलघुगःसूर्यादल्पगतिः सपरत्रपश्चिमदिशिअस्तंगच्छति यःभूरिजवःसूर्याधिकगतिः लघुःसूर्यात्भागैरल्पःसप्राच्यांपूर्वदिशिअस्तंयाति इदंसूर्य कृतोदयास्तलक्षणंदैनंदिनोदयास्तौग्रहाणांप्रवहानिलवशेनपूर्वपश्चिमयोर्वर्ततएवेति अत्रोपपत्तिः सूर्यादल्पोल्पगतिश्च

लघुगोल्पइनादुदेतिपूर्वेभूयान्भूरिगतिर्ग्रहःप्रतीच्याम् ॥
भूयाँल्लघुगःपरत्रचास्तंप्राच्यांभूरिजवोलघुःप्रयाति ॥ १० ॥
भास्करानगभुवोगुणचंद्राभूभुवोदिविषदस्तिथयोब्जात् ॥
प्राक्तनैर्निगदिताःसमयाशावक्रिणोभृगुविदोःक्षितिहीनाः ॥ ११ ॥

ग्रहःसूर्यात्पूर्वराश्यंशेस्थितोतःसूर्योदयात्पूर्वमेवतस्योदयः अतःकालांशतुल्यांतरेणतस्यपूर्वोदयःस्यात् यःसूर्यादधिकः अधिकगतिश्चग्रहःसःपश्चिमायामुदेतिविलोमत्वात् यःसूर्यादधिकःअल्पगतिस्तंग्रहंत्यक्त्वासूर्योग्रतोयाति अतः पश्चिमायामस्तः यःभागैरल्पःगत्याधिकःससूर्यंप्रतिगच्छति अतोल्पत्वात्पूर्वस्यामस्तोभवतीत्युपपन्नम् ॥ १० ॥ अथोदयास्तनिमित्तंकालांशानाह अब्जात्चंद्रमारभ्यग्रहाणांएतेकालांशाःस्युः भास्कराःद्वादशभागाश्चंद्रस्य नगभु

वः सप्तदश भौमस्य गुणचंद्राः त्रयोदश बुधस्य भूभुवः एकादश गुरोः दिविषदः नव शुक्रस्य तिथयः पंचदश मंदस्य भाक्त
नैः पूर्वाचार्यैरेते कालांशाः निगदिताः भृगुविदोः शुक्रबुधयोः वक्रिणोः सतोः एते कालांशाः क्षित्याः एतेन हीनाः अत्रोपप
त्तिः अत्रोदयोस्तो वा तुल्यैरेव कालांशैर्भवति कालांशलक्षणोपायो यथा यद्दिने ग्रहस्योदयोस्तो वा आकाशे ज्ञातस्तद्दिने
सूर्यग्रहयोरंतरे लग्नसूर्यांतरवत्तूलंकोदयैः कालः साध्यः ततः घटिकाः षड्गुणाः भागाः स्युः ते कालस्य अंशाः अतः कालां
शा इत्यन्वर्थनाम अत्र बुधशुक्रयोः वक्रिणोः सतोः निरेकैस्तैः कालांशैस्तयोरुदयास्तौ भवत इत्युपपन्नम् ॥ ११ ॥ अ

खांबुधयः खयमाः खभुजंगाः खांगमिताः खदशाक्रमशः स्युः ॥
पातलवाः कुसुताद्बुधभृग्वोर्मध्यमचंचलकेंद्रविहीनाः ॥ १२ ॥

थ भौमादीनां पातानाह कुसुताद्भौममारभ्य ग्रहाणां एते पातस्य लवाः भागाः स्युः खांबुधयः चत्वारिंशद्भागाः भौमस्य खय
माः विंशतिर्भागा बुधस्य खभुजंगा अशीतिभागाः गुरोः खांगमिताः षष्टिभागाः शुक्रस्य खदशशतमिताः भागाः शनेः
बुधभृग्वोः पातांशा मध्यमेन अहर्गणोत्पन्नेन चंचलकेंद्रेण शीघ्रकेंद्रेण विहीनाः कार्याः अत्रोपपत्तिः मंदस्फुटो ग्रहः शीघ्रप्र
तिमंडले भ्रमति विमंडलाश्रितः सन्निति तस्मान्मंदस्फुटादेव शरः साध्यते इत्युपपत्तौ ग्रहः सपातः कार्यः अत्र विमंडल
क्रांतिमंडलयोः संपातः पातः तस्य ग्रहस्य शराभावः एवमत्र संपाते क्रांतिपाते क्रांतिमंडलेयोराश्याद्यवयवः स एव पातः एवं
ग्रहाणां पातलवाः सिद्धाः पाठपठिताः एवं पातात् षड्भांतरेपि शराभावः एवं बुधशुक्रयोः पातलवाः शीघ्रप्रतिमंडलस्थाए

यपठिताःसंति स्वशीघ्रकेंद्रभागैरधिकाःकृत्वापठिताः अतःशीघ्रकेंद्रविहीनाःएतेपाताःमंदस्फुटग्रहयुक्तपातात् शरःसाध्यइत्यग्रेपिवक्ष्यतीत्युपपन्नम् ॥ १२ ॥ अथग्रहाणांशीघ्रकर्णानयनमेकवृत्तेनाह अयंदलानां खंडानांचयःस्यात् कुरेकः द्वौ त्रयः अब्धयश्चत्वारः युगानिचत्वारि अश्विनौद्वौ एतानिषट्खंडानिस्युः चल केंद्रंचेत्षड्भपुष्टंषड्राश्यधिकं तदाचक्राद्द्वादशराशिभ्यःशुद्धं अस्यचलकेंद्रस्ययानिभानिराशयःतन्मितार्द्धानामैक्यं लवघ्नागतात्भागगुणितभोग्यखंडात् त्रिंशताप्तलब्धंतेनतदैक्यंयुतंकार्यं ततःकुजात्मंगलमारभ्यकुयमलाब्धींदद्रिभ क्तंभौमस्यैकभक्तंबुधस्यद्विभक्तंगुरोश्चतुर्भक्तंशुक्रस्यैकभक्तंशनेःसप्तभक्तंक्रमात्तत्फलेनएतेंकाःऊनाःकार्याः धृतिःअष्टा

कुद्वित्र्यब्धियुगाश्विनोदलचय १।२।३।४।४।२श्चेत्षड्भपुष्टंचलंकेंद्रंचक्रविशुद्धमस्य
भमिताद्धैक्यंलवघ्नागताद्।।त्रिंशल्लब्धयुतंकुजात्कुयमलाब्धींदद्रिभक्तंक्रमात्तद्धीनाधृ
ति १८ रिष्विला१५ गुणभुवो१३ गोब्जा १९ इना १२ द्राक्श्रुतिः ॥ १३ ॥

दशभौमस्यफलेनहीनाभौमस्यशीघ्रकर्णःइषिला:पंचदशबुधस्यगुणभुवस्त्रयोदशगुरोःगोब्जाःएकोनविंशतिःशुक्रस्यइ नाःद्वादशशनेःएतेंकाःफलेनहीनाःसंतोयच्छेषंसाग्रहाणांद्राक्श्रुतिःशीघ्रकर्णःस्यात् अत्रोपपत्तिः अत्रकोटिज्यांत्यफल ज्ययोःमृगकर्कादिशीघ्रकेंद्रेयोगांतरंकोटिःशीघ्रकेंद्रदोर्ज्याभुजःअनयोर्वर्गैक्यपदंकर्णःशीघ्रप्रतिमंडलेव्यासार्द्धं अत्रतु दोर्ज्याकोटिज्यादिविधिर्नास्ति अतःप्रतिराशिशीघ्रकर्णःसाधितः शीघ्रफलयुतंराशित्रयंद्वितीयं अतःषड्राशिमध्ये पदद्वयमस्त्येव अतःषट्खंडान्येवकर्णार्थंशीघ्रकेंद्रात्साधितानितानिभवमितांत्रिज्यांपरिकल्प्यभौमशीघ्रफलांत्यज्यातः

साधितानि ग्रहाणांपरमशीघ्रफलज्याभिन्नाभिन्ना अतोहिभौमशीघ्रपरमज्या ८१ यामस्यांयद्येतानिखंडानितदेष्टगुहपर
मशीघ्रफलज्यासुकान्यतोबुधादीनांयमलाब्ध्यादिभक्तमुक्तं भौमस्ययथास्थितत्वात्कुभक्तमिति अनेनफलेनपरमशीघ्र
कर्णाःयावदूनीक्रियंतेतावदिष्टशीघ्रकर्णाभवंति परमशीघ्रकर्णास्तुत्रिज्यांत्यफलज्यायोगतुल्याः यथाभौमस्यांत्यफल
ज्या८१ इयंत्रिज्यायुता २०१ यदित्रिज्यायामस्यां १२० परमभौमशीघ्रकर्णोयं २०१ तदेष्टायांभवतुल्यायांकिमि
ति जाताः१८ अत्रभवमितित्रिज्यायांसप्तमितांत्यफलज्या७ अतस्त्रिज्यांत्यफलज्यायोगेपरमशीघ्रकर्णोयं १८ युक्तः

मंदस्पष्टखगात्स्वपातरहितात्क्रांत्यंशकाःकेवलात्कर्णाप्तास्त्रियमाहता
अथगुरोश्छेद्योचनाप्ताःपुनः ॥ स्वांघ्र्यूनाअसृजोंगुलादिकशरःपातोनदि
क्स्यादसौत्रिघ्नःस्यात्कलिकादिकःस्फुटतरस्तत्संस्कृतश्चापमः ॥ १४ ॥

एवंत्रिज्यांतफलज्यांतरेपरमाल्पशीघ्रकर्णः अत्रभौमस्यकुभक्तमितियदुक्तंतेनसर्वखंडयोगे १६ धृतिशुद्धेद्वयंपरमाल्पः
शीघ्रकर्णःसचायुक्तः तत्साधितोग्रेयःशरःसचत्रिज्याल्पे ११ शीघ्रकर्णेपुनर्द्विभक्तःकार्यइतियुक्तं अन्यत्रमहदंतरंस्या
त् त्रिज्याधिकेशीघ्रकर्णेनांतरंतत्रस्वांघ्र्यूनइत्येव अथवा तत्रापिचेद्विभक्तस्तदाकिंचिदंतरःशरःसःस्वल्पांतरत्वात्अं
गीकर्तव्यः अतोनदोषायेति एवमन्येषामपीति अतएवतद्धीनाधृतिरित्युपपन्नम् ॥ १३ ॥ एवंशीघ्रकर्णंप्रसाध्येदा
नींग्रहाणांशरंसाधयति स्वपातरहितात्मंदस्पष्टग्रहात्केवलादित्यदत्तायनांशात्क्रांतिभागाःसाध्याः तेत्रियमैस्त्रयोविं

शत्याआहताःकर्केणआप्ताःभक्ताः अथगुरोर्बृहस्पतेस्तर्हिलोचनाभ्यांद्वाभ्यांभक्ताःकार्याः असृजोभौमस्यचेत्तर्हिद्वा
भ्याःपुनःस्वांघ्रिणाऊनाःसंतःप्रातोनग्रहोयस्मिन्गोलेतद्दिक्अंगुलादिकशरःस्यात् असौत्रिगुणःकलादिकःस्यात् तेनक
लादिनाबाणेनअपमःग्रहक्रांतिःसंस्कृताएकान्यदिशोर्युक्तोनास्फुटतराभवतीत्यर्थः अत्रोपपत्तिः अत्रग्रहाणांपठिताः
शरकलाःशीघ्रकर्णाग्रस्थानीयाःशीघ्रप्रतिमंडलेशीघ्रकर्णोव्यासार्द्धंएवंशीघ्रप्रतिमंडलेमंदस्पष्टएवग्रहोभवति तत्रैवास्य
पातः अतोमंदस्पष्टात्पातयुतात्शरःसाध्यइतियुक्तमुक्तं उक्तंचसिद्धांतशिरोमणौ ॥ १४॥ ("अत्राचार्येणपाताःचक्र

(" मंदस्फुटोद्राक्प्रतिमंडलेहिग्रहोभ्रमत्यत्रचतस्यपातः ॥
पातेनयुक्ताद्गणितागतेनमंदस्फुटात्खेचरतःशरोस्मादिति ) "॥१४॥

शुद्धाःकृताःअतःपातरहितादियुक्तं अत्रानुपातः यदिचतुर्विंशति२४मितायांक्रांतौएताः पठितशरकलाःतदेष्टायांग्र
हक्रांतौकाइति अत्रलाघवार्थंस्वल्पांतरत्वात्अंगुलादिकशरस्योपयोगित्वात्सर्वेषांशराःपंचाशदंगुलोगृहीतः एवंभि
ष्टग्रहक्रांत्यंशानांपंचाशद्गुणःचतुर्विंशतिर्हरःयदिकर्णाग्रेअयंतदाचतुर्विंशतित्रिज्याग्रेकः एवंचतुर्विंशतितुल्ययोर्गुणह
रयोर्नाशेकृतेक्रांतिःपंचाशद्गुणःकर्णोहरः अत्रकर्णोहिभवमितत्रिज्यांप्रकल्प्यकृतोस्ति अतोन्योनुपातः यदिचतुर्विंशति
व्यासार्द्धेअयंतदाभवमितेकइति एवंभवपंचाशद्घातोगुणः५५०चतुर्विंशतिर्हरः अत्रसिद्धौगुणहरौहरेणापवर्तितौ जातो
गुणस्त्रयोविंशतिः अतःक्रांत्यंशकाःत्रियमाहताःकर्णाप्ताइति अत्रबुधशुक्रशनीनांस्वल्पांतरत्वात्समएवगृहीतः गुरोःप

ठितशरःपंचविंशतिःपंचाशन्मितःकृतोस्त्यतोलोचनानाइति एवंभौमस्यसप्तत्रिंशत् अतस्तेस्वांघ्यूनाइति परमाल्पशीघ्रक र्णोद्धितःद्वयात्तः अपिकलात्रयेणैकमंगुलमतस्त्रिघ्नःकलाद्यःस्यात् एवमत्रनाडीमंडलात्क्रांतिमंडलपर्यंतंदक्षिणोत्तरमंतरं क्रांतिः क्रांतिमंडलाद्ग्रहपर्यंतंशरः एवमुभयोःसंस्कारः स्पष्टाक्रांतिनाडिकामंडलंग्रहयोरंतरेभवतीत्युपपन्नम्॥ १४॥")
अथपंचांगोयस्फुटग्रहज्ञानेवक्रादिनज्ञानेचेष्टदिनस्थमंदस्पष्टग्रहसाधनंकरोति तिथिपटेपंचांगेगतंवर्तमानंयद्वक्रास्ताद्यं

वक्रास्ताद्यंतिथिपटगतंतद्दिनेस्योक्तकेंद्रंस्यात्तच्चाल्पंत्वभिमतदिनेस्वाशुकेंद्रोक्तगत्या ॥
तस्मात्प्राग्वच्चरफलमिदंचालितस्पष्टखेटेव्यस्तंदेयंमृदुजफलभाक्स्यात्ततोवाशराद्यम्॥ १५॥
प्राक्त्रिभेणवर्जितात्संयुतात्तुपश्चिमे ॥ खेटतोपमाक्षयोःसंस्कृतिर्नताल्वाः ॥ १६ ॥

तद्दिनेयद्ग्रहस्यउक्तंकेंद्रंत्रिनृपैरित्यादिकंस्यात् तत्अभिमतेइष्टेदिनेस्वशीघ्रकेंद्रोक्तगत्यागतगम्यदिनाहतेद्युभक्तेरित्या दिविधिनाचालनीयं तस्मात्शीघ्रकेंद्रात्पूर्वोक्तरोत्याशीघ्रफलंसाध्यं इदंचालितस्पष्टग्रहेव्यस्तंधनंचेत्तदाऋणंचेत्तदाध नंदेयं सग्रहोमंदस्पष्टोभवति तस्माद्वाशराद्यंसाध्यमिति अत्रोपपत्तिःप्रत्यक्षविलोमविधिनैवसुगमा ॥ १५ ॥
अथनतांशान्साधयति प्राक्पूर्वोदयास्तसाधनेराशित्रयेणहीनात्पश्चिमोदयास्तसाधनेराशित्रययुक्तात्स्पष्टात्ग्रहात्

क्रांतिःसाध्या साक्षांशैःसंस्कृताननतांशाःस्युरित्यर्थः॥ १६ ॥अथदृक्कर्मसाधयति षट्शैलाष्टनवार्कधृत्यदितिजाःएतानि खंडानिनतांशानांयोदशमांशस्ततुल्यखंडानामैक्यंकार्यं ततस्तत्अगतखंडघ्नशेषभागाद्यादशमांशेनयुतंशरांगुलगुणितं द्वादशभक्तंलिप्ताःदृक्कर्मकलाःभवंति ताःकलाःस्पष्टेग्रहेधनंवाऋणंदेयाः शरनतांशयोःएकदिक्त्वेधनंभिन्नदिक्त्वेऋणं पश्चिमोदयास्तसाधनेव्यस्तमिदं दृग्ग्रहःदृक्कर्मदत्तोग्रहःआकाशेदृग्गोचरोभवतीत्यर्थः अत्रोपपत्तिः ग्रहःयस्मिन्राश्याद्यवयवेवर्ततेसक्रांतिमंडलस्थोराश्याद्यवयवः यदाक्षितिजेउदेति तदैवग्रहस्यनोदयःग्रहस्यविमंडलेवस्थितत्वात्शर

षट्शैलाष्टनवार्कधृत्यदितिजाःखंडानिकार्यंनतोंशांशांशप्रभखंड-<br>
कैक्यमगतोच्छिष्टांशघाताद्युतम् ॥ आशाप्यारविहृच्छरांगुलहतं<br>
लिप्ताग्रहेताननतांशेष्वोःस्वर्णमभिन्नभिन्नदिशिसव्यस्तंपरेदृग्ग्रहः ॥ १७ ॥

तुल्येनांतरेणग्रहःक्षितिजादुन्नमितोनमितोवाभवति तदंतरस्यदृक्कर्मसंज्ञा यतोन्वर्थंनाम दृशःकर्म दृक्कर्मतावतांतरेणग्रहोदृग्गोचरोभवति तदपिदृक्कर्मद्विविधंआयनमाक्षजंचेति यतःशरःक्षितिजएवनास्तिकदंबाभिमुखत्वात् उक्तंचसिद्धांतशिरोमणौ एवमत्रचग्रहादग्रतःत्रिभंतरेदृक्कर्मणःपरमत्वात्पूर्वस्यांत्रिभिःहीनाःपश्चिमायांत्रिभयुक्तइति तद्ग्रहस्यनतांशज्यातोनुपातः यदिउन्नतज्याकोटौनतज्याभुजः तदाशरकोटौकइति दशभागोत्तरान्नतांशान्प्रकल्प्य तज्जीवाःस्वस्वोन्नतांशज्याभक्ताःसावयवाअतोद्वादशभिःसवर्णिताः अनुपातेशरःकला मकः अत्रांगुलाद्याग्गृहीतोतःपुनस्त्रिसव

र्णिताःकृत्वाखण्डानिपठितानि तत्रप्रथमंखंडंप्रतीत्यर्थंसाध्यते दृशतुल्यनतांशानांज्या २१ इयमेवषट्त्रिंशतासवर्णिता
७५६उन्नतांशज्ययानया ११८भक्ता जातमाद्यंखंडं६ एवमन्यानपि मध्येनुपातः यदिदृशभागैरेकंखंडंतदेष्टभागैः
किमिति फलयुक्तंगतखंडैक्यंकार्यं तस्यशरोगुणःवर्तते खण्डानिद्वादशगुणान्यतोद्वादशहरः अतोरविहृत्शरांगुलहत

क्रांतिवृत्तग्रहस्थानचिह्नंयदास्यात्कुजेनोतदाखेचरोयंयतः ॥ खेषुणोत्क्षिप्यतेनाम्यतेवाकु
जातेनदृक्कर्मखेटोदयास्तेकृतम् ॥ १ ॥ नैवबाणःकुजेसौकदम्बोन्मुखस्ततसमुत्क्षेपणंनामनं
चद्विधा ॥ आयनंचाक्षजंतेनकर्मद्वयंतत्प्रपञ्चःपुनःसंविविच्योच्यते॥२॥कल्पोल्पोरविरर्क
दृक्खचरयोरन्यश्चलग्नंतयोर्मध्येस्युर्घटिकाश्चपूर्ववदिमाःपश्चात्सचक्रार्धयोः ॥ षड्घ्नाःकाल
लवाअमोभिरधिकैर्गम्योस्तऊनैर्गतःप्रोक्तेभ्योभ्यधिकैर्गतःसमुदयोन्यूनैस्तुगम्योभवेत्॥१८॥

मिति धनर्णोपपत्तिर्यथा उन्नमितेऋणंनमितेधनं यतःखस्वस्तिकाक्रांतिवृत्तस्ययत्रोन्नमनंतद्दिग्ग्रहस्यापिक्षितिजान्नम
नंभवति तस्माद्धनं अन्यदिक्त्वेऋणमित्युपपन्नम् ॥१७॥ १॥ २ ॥ अथोदयास्तयोःकालज्ञानमाह व्याख्या अ
र्कःसूर्यःदृक्खचरोदृक्कर्मदत्तोग्रहः अनयोर्द्वयोर्मध्येयोल्पःसरविःकल्पःअधिकोलग्नंतयोर्लग्नार्कयोर्मध्येभुक्तभोग्यादि
विधिनाघटिकाःसाध्याः पश्चिमोदयास्तसाधनेसचक्रार्धयोःषड्राशियुक्तयोर्लग्नार्कयोर्घटिकास्ताःषड्गुणाःइष्टकालभा

गाः स्युस्तैरिष्टकालांशैः प्रोक्तकालांशेभ्यः चंद्रशुक्रयोस्तु वक्ष्यमाणसंस्कारसंस्कृतेभ्यः अभ्यधिकैरस्तोगम्यः न्यूनैर्गतः उद
यस्तु अधिकैर्गतः न्यूनैर्गम्यः अत्रोपपत्तिः प्रत्यक्षसुगमा ॥ १८ ॥ अथ दिवसानयनं कथिताः पूर्वोक्ताः इष्टाः इदानी
मानीताः ये कालांशास्तेषां यदंतरं तस्य कलाः खाभ्राग्निभि ३०० र्विनिहताः शतत्रयगुणाः ततो रविभोदयेन सूर्याधिष्ठित
राशैः स्वदेशोदयेन भक्ताः परतः पश्चिमोदयास्तसाधने तत्सप्तमोदयेन भक्ताः कार्याः ततो जवांतरेण रविग्रहगत्यंतरेण भक्ता
वक्रिणि ग्रहे गतियोगभक्ताः संतः उदयास्तयोर्दिनानि स्युरित्यर्थः अत्रोपपत्तिः यदि उदयासुभिः राशिकलाः १८०० ल

खाभ्राग्निभि ३०० र्विनिहताः कथितेष्टकालभागांतरस्य कलिकारविभोदयाप्ताः ॥ तत्सप्तमे
न परतोथ जवान्तराप्ता योगेन वक्रिणि दिनान्युदयास्तयोः स्युः ॥ १९ ॥ स्यात्खाभ्राग्न्युदयांतरं
भविहृतं स्वर्णं पृथूनोदये यत्तत्संस्कृतदृष्टिकर्मलवतः प्राणांशसंस्कारिताः ॥ पूर्वोक्ता भृगुचंद्रयोः
क्षणलवाः स्पष्टा भृगोश्चोनिताद्वाभ्यां तैरुदयास्तदृष्टिसमतास्याद्दक्षितैषामया ॥ २० ॥

भ्यंते तदा कालांशांतरकलातुल्यासुभिः किं एवं कालांशांतरकलानां अष्टादशशतं गुणः उदयासवो हरः अत्रोदयपलानि
संत्यतोन्यः षड्हरः एवं गुणे षड्भक्ते जातस्त्रिशतीगुणः अत उक्तं खाभ्राग्निर्विनिहता इति पश्चिमायां सप्तमोदयादेवानुपातः
यदि गत्यंतरकलाभिरेकं दिनं तदाभिः किमित्यतो जवांतराप्ता इति वक्रिणि गतियोगं विनांतरं न सिध्यति अतो गतियोगा
प्ता इति एवमुदयास्तदिनानि स्युरित्युपपन्नम् ॥ १९ ॥ अथ चंद्रशुक्रयोरुदयास्तयोरंतरमाह शतत्रयस्योदयस्य च य

दृंतरंतद्भैःसप्तविंशत्याविहृतंभक्तंमत्पृष्टफलंस्यात्तत्फलंशतत्रयात्अधिकेउदयेधनंऊनेऋणं अनेनभागादिफलेनसंस्कृतदृ
क्कर्मभागेभ्यःयःप्राणांशःपंचमभागस्तेनपूर्वोक्तानवद्वादशमिताःशुक्रचंद्रयोःकालांशाःसंस्कृताःधनर्णत्वेनस्पष्टाःस्युः भू
गोःशुक्रस्यद्वाभ्यांचहीनाःकार्याः तैःकालांशैःशुक्रचंद्रयोरुदयास्तदृष्टिसमतास्यात् एषामयालक्षितावर्तमानघटना
मवलोक्यज्ञाताऽत्रातोमूलमुपलब्धिरेववासनेतिसिद्धम् ॥ २० ॥ अथागस्त्योदयास्तज्ञानमाह अक्षभाअष्टगुणाभा
गाःस्युस्तैर्भागैर्गजशैलाअष्टसप्ततिःऊनाःवसुखेचराःअष्टनवतिःयुक्ताःकार्याः तत्समेसूर्येसतिक्रमाद्धटजोगस्त्यः अस्त

पलभाष्टवधोनसंयुतागजशैलावसुखेचरालवाः ॥
इहतावतिभास्करेक्रमाद्धटजोस्तंह्युदयंचगच्छति ॥ २१ ॥

मुदयंचगच्छतीत्यर्थः अत्रोपपत्तिः अगस्त्यध्रुवःसप्ताशीतिभागाआयनदृक्कर्मसंस्कृताः तथास्यकालांशाद्वादश १२
एतेक्षेत्रांशाःएकादशसप्ताशीत्यंशेषुयुक्ताः ९८ एतन्मितेसूर्येउदयः अस्तेऽप्यरतायनदृक्कर्मसंस्कृतेध्रुवभागाः ८९
क्षेत्रांशै ११ रूनाजाताः ७८ एतन्मितेसूर्येस्तः इदंनिरक्षे साक्षेतुअक्षदृक्कर्मकर्तुंयुज्यते शरस्यमहत्त्वात् मुख्य
कल्पेनस्फुटास्फुटक्रांतिज्ययोश्चरार्धयोरित्यादिविधिनाएकांगुलाक्षभायांअष्टौभागाउत्पद्यंते ततोनुपातः यद्येकांगुल
पलभायाअष्टौभागास्तदेष्टपलभयाकिमिति अक्षभायाःअष्टौगुणः रूपंहरःअतःपलभाष्टवधोनसंयुताइत्याद्युपपन्नं अ

त्रानुपातस्याप्राप्तौप्राप्तिःकृता तेनषट्पलभापर्यंतंस्वल्पांतरं अग्रेबह्वंतरम्॥२१॥अथग्रहस्यनित्योदयास्तज्ञानमाह सू
र्यास्तकालेयोग्रहःसषड्भसूर्यात्अधिकः अथवाकेवलात्सूर्यादूनःसनिश्युदेतीतिअन्यथास्तमेति अथोसग्रहःक्रमेणपूर्वप
श्चात्स्थदृक्कर्मभाग्विधेयइति अत्रोपपत्तिः ग्रहोदयेग्रहतुल्यंलग्नंसूर्यास्तेसषड्भार्कतुल्यमुदयलग्नंकेवलार्कतुल्यमस्तलग्नं
अतःषड्भार्काद्ग्रहेअधिकेरात्रौग्रहस्योदयः केवलार्काद्ऊनेअस्तइति प्रत्यक्षंउदयास्तयोःकालज्ञानार्थंदृक्कर्मदत्तोग्रहःका

खेचरोर्कास्तकालेसषड्भार्कतोयोधिकोल्पोर्कतोनिश्युदेतीहसः ॥ अस्तमेत्यन्यथायोविधेयः
क्रमात्पूर्वपश्चात्स्थदृक्कर्मभाक्सग्रहः ॥२२॥ उद्गमेयातकालःखगात्स्वस्तकेषड्भयुक्तात्सषड्भा
र्कभोग्यान्वितः ॥ युक्तमध्योदयोस्योद्गमास्तेभवेद्रात्रियातोथतत्कालखेटात्स्फुटः ॥ २३ ॥

र्यः॥२२॥अथोदयास्तकालेरात्रिगतघटिकाज्ञानमाह उदयेसतिग्रहात्भुक्तकालःसाध्यः अस्तेचषड्भयुक्तात्ग्रहात्यात
एवकालःसाध्यः सषड्भसूर्यास्तकालेनयुक्तः ततोमध्योदययुक्तःकार्यः एतावान्कालःग्रहस्योदयेअस्तेचरात्रेर्गतोभवति
तात्कालिकाद्ग्रहादृक्कर्मादिविधायसकालःपुनःसाध्यःस्पष्टःस्यादित्यर्थः अत्रोपपत्तिःपूर्वंप्रतिपादितैव चंद्रस्यसकृत्प्र

काशार्थंविशेषंवदति ॥२३॥ चंद्रस्यसकालश्चेद्गोपलैर्नवपलैः उदयेस्तेक्रमेण आढ्यःऊनःकार्यः प्रतिघटिकंपलद्वयेनयु
क्तः द्विगुणघटीतुल्यैःपलैर्युक्तः स्पष्टःकालःस्यात् तात्कालिकचंद्रात्पुनःकालःसाध्यइतिप्रयासेनकिंप्रयोजनमितिअत्रो
पलब्धिरेववासना ॥ २४ ॥ दैवज्ञवर्यस्यदिवाकरस्यसुतेनमल्लारिसमाह्वयेन ॥ वृत्तौकृतायांग्रहलाघवस्यखगो
दयास्तानयनंसमाप्तम् ॥१॥ इतिश्रीगणेशदैवज्ञविरचितस्यग्रहलाघवस्यटीकायांमल्लारिदैवज्ञविरचितायामुदयास्ता
धिकारोनवमःसमाप्तः ॥ ९ ॥

चंद्रेस्तुगोपलाढ्योनःकार्योथप्रतिनाडिकम्॥युतोद्विद्विपलैःस्पष्टःकिंस्यात्तात्कालिकेंदुना॥२४॥
प्राग्दृष्टिकर्मखचरस्तनुतोल्पकोस्तात्पुष्टश्चदृश्यइहखेचरभोग्यकालः ॥ लग्नेनयुक्चविवरोदययु
ग्द्युयातःस्यात्खेचरस्यसितगोर्यदिगोपलोनः ॥ १ ॥

अथग्रहच्छायाधिकारोव्याख्यायते दत्तपूर्वदृक्कर्माग्रहःइष्टकालीनलग्नात्यदाल्पःअस्तात्सप्तमलग्नात्यदाधिकःस्यात्त
दातत्समयेग्रहोदृश्यः इहेष्टकालोग्रहस्यभोग्यकालः तनुभुक्तयुक्मध्योदययुक्कार्यः ग्रहस्योदयास्तद्युगतकालःस्यात् चं
द्रस्यचेत्तर्हिनवपलोनःकार्यः अत्रोपपत्तिरतिसुगमा ॥ १ ॥

अथग्रहच्छायासाधनमाह अंगुलादिकःशरःपलभागुणःचतुर्विंशतिभक्तःकार्यः अनेनपलात्मकफलेनग्रहात्सूर्यवत्सा धितंचरंशरचरैकान्यगोलेयुक्तोनंस्फुटंस्यात् अतःचराद्दिनमानंसाध्यं अथग्रहस्यद्युगतकालात्सूर्यवच्छायाद्यंसाध्यंएवं तावद्दिज्ञातेरात्रिगतेग्रहस्यद्युगतमानीयच्छायाद्यंसाधितं इदानींदृष्टच्छायाद्युगतद्वारेणवक्ष्यमाणरीत्यारात्रिगतंसाध्य मित्याह अथेति खचरभादेःग्रहस्यच्छायायंत्रभागेभ्यःनिशिगतंरात्रिगतघटिकादिकंस्यात् कथंपुनःप्रभादिज्ञानंस्यादि त्यतआह ब्रुवइति आरादीनांभौमादीनांद्युतिपरिगमंछायाज्ञानंयंत्रवशतःब्रुवेवक्ष्यमाणरीत्यास्यात् अत्रोपपत्तिः अत्र

जिनाप्तोक्षाभाग्नोंगुलमयशरोनेनतुचरंस्फुटंसंस्कृत्यातोदिनमथखगस्यद्युविगतात् ॥
प्रभाद्यंसंसिध्येदथखचरभादोर्निशिगतंब्रुवेथारादीनांद्युतिपरिगमंयंत्रवशतः ॥ २ ॥

चरंशरसंस्कृतस्पष्टक्रांतितःसाध्यं तत्केवलक्रांतितःएवखंडकैःसाधितं अतोहिमध्यमस्पष्टक्रांत्योरंतरंशरएवतस्माच्चरंसा ध्यं तत्पूर्वचरेसंस्कार्यंस्पष्टक्रांतितःकृतंचरंभविष्यति अतोनुपातः यदिद्वादशकोटौपलभाभुजःतदाशरतुल्यक्रांतिको टौकइति अत्रशरोंगुलाद्योंतःकालार्थंत्रयंगुणः एवंजाताःकलाःतावंतएवासवःतेषड्भक्ताःपलानि एवंशरस्यद्वादशषड्भा तोहरः७२ त्रयंगुणः३ गुणहरौगुणेनापवर्तितौजातोहरश्चतुर्विंशतिपलभागुणोस्त्येव अतोजिनाप्तइत्याद्युपपन्नम्॥ २॥

प्रतिज्ञातांछायांधीयंत्रेणाह जलादर्शादौग्रहंप्रतिबिंबितंपश्येत् दृगौच्यंइतिभूतलात्दृक्पर्यंतंलंबंगणयेत् एवंलंब
पातप्रतिबिंबांतरमध्यंगुलादिगणनीयं तत्सूर्यहतंद्वादशगुणंदृगौच्यांगुलादिकेनभक्तंग्रहस्यच्छायास्यात् प्रतिबिंबि
तंवेतिवाशब्देनतुरीयादियंत्रविद्धग्रहोन्नतांशेभ्योयंत्रलब्धोत्थक्रांतिलवाखाइत्यनेनकर्णप्रतिसाध्यततःकर्णार्कवर्गविवरा
त्पदमिष्टमेतिच्छायांसाधयेदितिविधांतरंसूचयति अत्रोपपत्तिरेकानुपातेनयदिदृगौच्यतुल्यायांकोटौलवपातप्रतिबिंबां

पश्येज्जलादौप्रतिबिंबितंवाखेटंदृगौच्यंगणयेच्चलंबम् ॥ तंलंबपातप्रतिबिंबमध्यंदृगौच्यहृ-
त्सूर्यहतंप्रभास्यात् ॥ ३ ॥ ज्ञात्वानुमानान्निशिपातनाडीस्तत्कालखेटात्कथितैश्चराद्यैः ॥
दृष्टप्रभादेर्द्युगतोग्रहस्यसाध्यस्त्विहेंदोर्यदिगोपलाढ्यः ॥ ४ ॥ प्राग्दृक्खचरागभाढ्यभा
न्वोरल्पोर्कस्त्वपरस्तनुस्तदंतः ॥ कालःसखगोदयेद्युशेषोरात्रीतःक्रमशोग्रहेल्पपुष्टे ॥ ५ ॥

तरभूर्भुजः तदाद्वादशकोटौकेतिछायास्यादेवेतिसुगमा ॥ ३ ॥ अथग्रहस्यद्युगतकालसाधनंवदति अनुमानात्स्थू
लत्वेनरात्रौगतघटीःज्ञात्वा तात्कालिकग्रहात्कथितस्पष्टचरादेर्दृष्टच्छायादितश्चग्रहस्यसूर्यवद्द्युगतःकालःसाध्यः चं
द्रस्यचेत्तर्हिनवपलान्वितःकार्यः ॥ ४ ॥ अथग्रहोदयेदिनशेषरात्रिगतकालंसाधयति पूर्वंदृक्कर्मदत्तग्रहसषड्भसूर्य

योमध्येअल्पोरविः अन्यतुल्यं एतदंतरेयःकालःसग्रहोदयसमयेद्युशेषोथवारात्रीतःस्यात् क्रमशइतिग्रहेसषड्भूयांद
ल्पेद्युशेषः अधिकेरात्रीतःस्यादित्यर्थः ॥ ५ ॥ अथास्मात्कालाद्रात्रिगतमाह तेनद्युशेषेणग्रहद्युयातःऊनःरात्रि
गतेनसहितःसत्सूर्यास्ताद्रात्रिगतकालःस्याच्चंद्रस्यचेत् अनुमानज्ञातरात्रिगतघटीषुआनीतरात्रिगततोयावदल्पमधि
कंस्यात्तावदेवद्विगुणंपलात्मकंस्यात् तैःपलैःसःकालःअल्पश्चेदूनःपूर्वाधिकश्चेदन्वितःकृतःस्फुटःकालोभवतीत्यर्थः अ

तेनोनोथचसहितोग्रहद्युयातःस्यादर्कास्तमयकतोनिशिप्रयातः ॥ चेदग्लावोनुमितघटी
ष्वतोल्पपुष्टंद्विघ्नंतत्समफलयुक्स्फुटःसः ॥ ६ ॥ दास्रादष्टचमूर्च्छनागजगुणानंदाब्धयो
दृग्रसाःषट्तर्कायुगखेचरारसदिशोऽब्याशानवार्काःक्रमात् ॥ भाग्यादष्टयुगेंदवोक्षतिथयः
खात्यष्टयोंशाध्रुवाः ॥ सप्ताब्धागजगोभुवोरविदृशःसिद्धाश्विनःखत्रिदृक् ॥ १ ॥

त्रोपपत्तिःप्रत्यक्षमुगमा ॥ ६ ॥ दैवज्ञवर्यस्यदिवाकरस्यसुतेनमल्लारिसमाह्वयेन ॥ वृत्तौकृतायांग्रहलाघवस्यखेटप्रभा
द्यानयनाधिकारः ॥ १ ॥ इतिश्रीगणे० ग्र० टी० मल्ला० ग्रहच्छायाधिकारोदशमः ॥ १० ॥
अथनक्षत्रच्छायाधिकारोव्याख्यायते तत्रादौनक्षत्रध्रुवानाह अश्विनीमारभ्यसर्वेषांनक्षत्राणांक्रमात् दृत्तायनदृक्कर्मा

णोभागाद्याएवध्रुवाःस्युरिति तेत्रिंशद्भक्ताराश्याद्योभवंतीत्यर्थः क्षेपोनक्षत्राणांवक्ष्यमाणःशरःपलभागुणःद्वादशभक्तः भागादिफलंग्राह्यं तत्पूर्वध्रुवेधनंपश्चिमध्रुवेऋणं इदमपिदक्षिणशरेउत्तरशरेविपरीतंतेस्वदेशेनक्षत्रध्रुवाःस्युरिति अत्रोपप त्तिः तत्रभवेधार्थंगोलवेधोक्तविधानेनविपुलंगोलयंत्रंकार्यं तत्रखगोलस्यांतर्भूगोलेआधारवृत्तद्वयस्योपरिविषुवद्वृत्तंतत्र चयथोक्तंक्रांतिवृत्तंभगणांशांकितंकार्यं ततस्तद्गोलयंत्रंसम्यग्ध्रुवाभिमुखयष्टिकंजलसमक्षितिजवलयंचयथाभवतित थास्थिरंकृत्वा रात्रौगोलचिह्नमध्यगतयादृष्ट्यारेवतीतारांविलोक्य क्रांतिवृत्तेमीनांतेचिह्नंकार्यं ततोमध्यगतयैव

मूलाःस्युर्द्विजिनाःशरानगदृशःकंगाश्विनोष्टेषुदृग्बाणर्क्षाणिरसाष्टदृग्नखगुणास्तन्वाग्नयो-
श्वामराः ॥ खंदत्तायनदृक्क्रियाःस्युरिहचक्षेपोक्षभाघ्नोर्क १२ हृत्स्वर्णप्राक्परतोन्यथोत्तर
शरेतेस्युःस्वदेशेध्रुवाः ॥ २ ॥

दृष्ट्याअश्विन्यादेर्योगतारांविलोक्यतस्योपरितद्वेधवलयंनिवेश्यं एवंकृतेवेधवृत्तक्रांतिवृत्तयोर्यःसंपातस्तन्मीनांतचि ह्नयोरंतरेयेंशाः तेतस्यभध्रुवांशाः वेधवलयेतस्यसंपातस्ययोगतारायाश्चांतरेयेंशाःतेतस्यभस्यदक्षिणाउत्तरावाध्रुवसक्तवृ त्तेस्पष्टशरांशाज्ञेयाः अत्रयेध्रुवाःतेदत्तायनदृक्कर्माणएवआक्षदृक्कर्मदेयं तत्रानुपातः यदिद्वादशकोटौपलभाभुजस्तदाशर कोटौकइति अतएवक्षेपोक्षभाघ्नोर्कहृदित्युपपन्नं याम्येशरेप्राच्यांनामनंप्रतीच्यामुन्नामनंसौम्यशरेत्वन्यथा अतःस्व

र्णभाक्परतोन्यथोत्तरशरइतिपुक्तं यत्तुनृसिंहदैवज्ञकृतटिप्पणेरेखातःप्राग्देशेधनंप्रत्यग्देशेऋणमितिदृश्यते तल्लेख कदोषेणेतिप्रतीमः ॥ १ ॥ २ ॥ अथनक्षत्राणांशरभागान्वदति अस्योपपत्तिःपूर्वमेवप्रतिपादितास्ति ॥ ३ ॥ अथलुब्धकादीनांध्रुवान्शरांश्चकथयति प्रजापतिब्रह्महृदग्न्यगस्त्यापांवत्सलुब्धकानामेतेध्रुवांशकास्तेषांएतेभागाः

दिक्सूर्येष्विषुदृक्कुशिवांगखनगाभ्राकांश्चविश्वेभवास्त्वाष्ट्राद्दौनगवह्नयःकुयमलाग्नीभाक्षबाणा द्विषट् ॥ कर्णास्त्रिंशदरित्रयःखजिनभाभ्रंत्वाष्ट्रहस्ताहिभेद्दोशात्षट्सुकभात्रयोशरलवा याम्याउदक्शेषभे॥३॥स्पष्टार्थंप्रजापतिब्रह्महृदग्न्यगस्त्यापांवत्सलुब्धध्रुवकांशकाःस्युः ॥ कुषट्षडक्षास्त्रिशरानभोष्टौत्र्यष्टंद्वोभूफणिनःक्रमेण ॥ ४ ॥ तेषांक्रमाद्दोशिखिनःखरा माअष्टौरसाश्वाःशिखिनःखवेदाः ॥ शरांशकाःस्युर्मुनिलुब्धयोस्तुयाम्यास्तुसोम्याःपरि शेषकाणाम् ॥ ५ ॥ निजदेशभवाद्ध्रुवाच्चबाणाछायायंत्रलवादिखेटवत्स्यात् ॥ छायादे रपिचेहरात्रियातंनक्षत्रग्रहयोगउक्तवच्च ॥ ६ ॥

स्युरितिसुगमार्थं अत्रोपपत्तिःनक्षत्रोक्तरीत्यैवसुगमा ॥ ४ ॥ ५ ॥ अथनक्षत्रध्रुवात्तच्छायाद्यंसाध्यमितिवदति स्वदेशीयोनामदृत्ताक्षपूर्वदृक्कर्मकःनक्षत्रध्रुवोयःस्यात् तस्मात्प्राग्दृष्टिकर्मखचरइत्यादिनाछायायंत्रांशादिकंग्रहवत्स्या त् तथापश्येज्जलादावित्यादिनाज्ञानात् छायादेःरात्रिगतंतद्वदेवस्यात् नक्षत्रग्रहयोगःग्रहयुतिवत् अतएवकेचित्पठंति

‘ द्युचरभध्रुवकांतरलिप्तिकाद्युगतिभुक्तिहृताहिगतागतैः॥फलदिनैर्द्युचरेधिकहीनकेयुतिरितिहेतरथाखलुवक्रिणीति’ द्यु
गतिर्ग्रहः स्पष्टमन्यत् अत्रोपपत्तिःसुगमा ॥ ६ ॥ अथग्रहस्यरोहिणीशकटभेदंतत्फलंचाह योग्रहःवृषभेसप्तदशभा
गमितःस्यात् तस्यशरोपियदिदक्षिणःपंचाशदंगुलाधिकःस्यात्तदासौग्रहःरोहिणीशकटंभिनत्तीतिज्ञेयं असृक्भौमःश
निश्चंद्रोवारोहिणीशकटंभेदयति तदाजनक्षयोलोकानांमहतीपीडास्यादित्यर्थः अत्रोपपत्तिः रोहिणीध्रुवःवृषेएकोन

गविनगकुलवे १७ खगोस्यचेद्यमदिगिषुःखशरांगुलाधिकः ॥
कभशकटमसौभिनत्त्यसृक्शनिरुडुपोयदिचेज्जनक्षयः ॥ ७ ॥
स्वर्भानावदतिभतोष्टऋक्षसंस्थेशीतांशुःकभशकटंसदाभिनत्ति ॥
भौमार्क्योःशकटभिदायुगांतरेस्यात्सेदानींनहिभवतीहशिखपाते ॥ ८ ॥

विंशतिभागाः आक्षदृक्कर्मसंस्कारार्थंभागद्वयंहीनमेवस्वल्पांतरत्वात्कृतं तत्समएवग्रहेतद्भेदः अतउक्तंगविनगकु १७
लवेइति एवंरोहिणीशकटंपंचतारात्मकंपंचाशदंगुलंयदस्तितन्मध्येग्रहस्यप्रवेशः दक्षिणशरेपंचाशदधिकएवभव
ति यतोरोहिणीशरःशतांगुलोयाम्यः अत्रयोगतारायाम्यास्ति ॥ ७ ॥ अथचंद्रस्यशकटभेदसमयमाह
राहौपुनर्वसुमारभ्याष्टनक्षत्रमध्येवर्तमानेसतिचंद्रोरोहिणीशकटंसदाभिनत्त्येव मंगलशन्योःशकटभेदःयुगांतरेस्यात्

इदानींयस्मिन्पातेखांबुधयइत्यादिकेनैवस्यात् अत्रोपपत्तिः चंद्रोवृषभेसप्तदशभागमितः तस्यशरोदक्षिणःपंचाश दंगुलाधिकःपुनर्वस्वाद्यष्टनक्षत्रस्थेराहावेवभवतीतिप्रत्यक्षं भौमशन्योरेताद्दशेपातेदक्षिणःशरःपंचाशदंगुलाधिकोनभ वत्येव ॥ ८ ॥ अथखमध्यस्थनक्षत्रदर्शनात्तत्काललग्नंरात्रिगतंचकथयति खमध्येयाम्योत्तरवृत्तेवर्तमानंयन्नक्षत्रंत स्ययःउक्तःध्रुवःअष्टचमूर्च्छनेत्यादितस्मात्साधितंअस्फुटंसूर्यवत्चरं तेनचरेणयत्कृतंदिनार्धंसइष्टकालः नक्षत्रध्रुवएवर

खमध्यगर्क्षध्रुवतोऽस्फुटंचरंततोदिनार्द्धान्निजभोदयैस्तनुः ॥ भवेत्तदालग्नमथोतदं
गभान्वितार्कमध्येघटिकानिशागताः ॥९॥ उद्यद्ध्रुवकःस्वदेशजोस्तंवाप्राग्वतः
सषड्ग्रहः ॥ स्यात्तत्कालविलग्नकंततःप्राग्वत्स्युर्घटिकानिशागताः ॥ १० ॥

विःताभ्यांस्वदेशीयोदयैर्यत्साधितंलग्नंतात्कालिकलग्नंस्यात् ततस्तल्लग्नसषड्भार्कयोर्मध्येरात्रिगतघटिकाःस्युरित्यर्थः अ त्रोपपत्तिः नक्षत्रस्ययत्कृतंदिनार्धंसएवेष्टकालः नक्षत्रस्यखमध्यस्थितत्वात् तस्मात्साधितंलग्नंतात्कालिकलग्नंभवतीत्या धतिसुगमम् ॥९॥ अथनक्षत्रोदयास्तलग्नेताभ्यांनिशिगतंचवदति उदयेवर्तमानंयन्नक्षत्रंतस्ययःस्वदेशीयोध्रुवःसःसष ड्भःसन्नस्तलग्नंभवति ततस्तल्लग्नसषड्भार्कयोर्मध्येप्राग्वद्रात्रिगताघटिकाःस्युरित्यर्थः ध्रुवउद्यदुडोःस्वदेशइतिपाठःसाधुः

अत्रोपपत्तिरतिसुगमा ॥ १० ॥ अथस्वदेशीयानिनक्षत्राणांउदयादीनिस्थिरलग्नानिकार्याणीत्याह निजदेशप लभावशतःउदयंखमध्यंअस्तंवागच्छतोनक्षत्रस्योकरीत्यासुधीःस्थिरलग्नकानिकुर्वीतेत्यर्थः चतुर्भितांपलभांप्रकल्प्य आचार्येणस्थिराणिमध्यलग्नानिशिष्यकृपयाकृतानिसंति भाग्लग्नस्यलवाःखमध्यकगतेदास्त्रेद्विदिग्भिर्मिताइत्यादि भिः ॥ ११ ॥ दैवज्ञवर्यस्यदिवाकरस्यसुतेनमल्लारिसमाह्वयेन ॥ वृत्तौकृतायांग्रहलाघवस्याभूद्दक्षदीप्त्यानयना धिकारः ॥ १ ॥ इतिश्रीग्रहलाघवस्यटीकायांनक्षत्रच्छायाधिकारएकादशः ॥ ११ ॥

इतिनैजदेशपलभावशतोह्युदयंखमध्यमथवास्तमयम् ॥ व्रजदश्विभादिषुसुखार्थ
मिहस्थिरलग्नकानिविदधीतसुधीः ॥ ११ ॥ मासस्यप्रथमेंतिमेथवांग्रौविधुश्रृंगो
न्नतिरीक्ष्यतेयदह्नि ॥ तपनास्तमथोदयेवगम्यास्तिथयःसावयवाःक्रमाद्गतैष्याः ॥१॥

अथचंद्रश्रृंगोन्नत्यधिकारोव्याख्यायते मासस्यप्रथमेचरणेअथवाअंतिमेचरणेयस्मिन्नभीष्टेदिनेश्रृंगोन्नतिरवलोक्य ते तद्दिवसेतपनास्तमयोदयेक्रमाद्दितिशुक्लपक्षेसूर्यास्तकालेगततिथयःकृष्णपक्षेसूर्योदयेएष्यतिथयःसावयवाज्ञेयाः अ त्रोपपत्तिः एषचंद्रःजलमयस्तस्ययथायथासूर्यकिरणसंयोगस्तथातथाश्रृंगौच्च्यं एवममायांसूर्यचंद्रयोःसाम्यात्तत्रसिता भावः एवंप्रतिपदिद्वादशभागांतरेकिंचित्सितं एवमष्टम्यामर्धबिंबंसितं ततसितंनसमौच्च्यं कक्षाभेदात् सूर्यचंद्रयोः

दक्षिणोत्तरांतरस्यविद्यमानत्वात् अत्रबिंबार्धादधिकेंसितेशृंगौच्यदर्शनाभावः अतएवशुक्लाष्टमीपर्यंतंकृष्णाष्टमी
तोग्रेवाशृंगोन्नतिरवलोक्येत्युपपन्नं एवंशुक्लपक्षेशृंगोन्नतिः सूर्यास्तासन्नाकृष्णपक्षेसूर्योदयासन्नाभवति अतएव
तपनास्तसमयेत्याद्युक्तम् ॥ १ ॥ अथगतैष्यसावयवतिथिभ्योरवितश्चंद्रंसाधयति द्वादशगुणास्तिथयोभा
गाः तैःर्भागैःसूर्यःमासांत्यपादेहीनःमासप्रथमांघ्रौयुक्तःचंद्रस्यात् षोडशगुणातिथिःतिथिवर्गेणोनापलभागुणापं
चदशभक्ताफलंभागादिकमुत्तरंस्यात् तत्सूर्यक्रांत्यासंस्कृतंकार्यं अत्रसर्वत्रसंस्कारस्तुएकदिशोर्योगःअन्यदिशोरंत

रविहततिथयोंशास्तद्वियुग्युक्क्रमेणद्युमणिरपरपूर्वेमासपादेविधुःस्यात् ॥
नृपगुणतिथिरूनास्वघ्नतिथ्याक्षभाघ्नीशरकुहृदुदगाशासंस्कृतार्कापमांशैः ॥ २ ॥

रमितिप्रसिद्धः चंद्रस्यव्यस्तदिशाशरेणव्यस्तदिक्क्रांत्याचतत्संस्कार्यं ततस्तद्विगुणाभिस्तिथिभिःभाज्यंसंस्कारः
यद्दिक्तद्दिक् अंगुलाद्यंवलनंस्फुटंस्वीयोयःपंचमांशस्तेनहीनास्तिथयः अंगुलाद्यंसितंस्यादित्यर्थः अत्रोपपत्तिः र
विचंद्रांतरेद्वादशभागतुल्येएकातिथिर्भवति अतस्तिथयोद्वादशगुणाःरविचंद्रांतरभागाजाताः तेरवौयोज्याश्चंद्रोभवत्ये
व अतएवात्रशुक्लेयुक्ताइत्युक्तं कृष्णेवियोज्याः परमत्रकृष्णेएष्यतिथयोगृहीताःसंत्यतोहीनाइत्युक्तं अथवलनोपपत्तिः
तत्रसूर्यचंद्रयोःदक्षिणोत्तरमंतरंभुजः तस्यवलयसंज्ञा यतोन्वर्थंनाम तावतांतरेणचंद्रशृंगंवलति ऊर्ध्वाधरमंतरंकोटिः
तयोर्मध्येतिर्यक्कर्णः तद्दक्षिणोत्तरमंतरंसाध्यते सूर्यक्रांतिःचंद्रस्यशरेणक्रांत्याचसंस्कार्या तत्रव्यस्तदिक्त्वेअयंहेतुः

यतउभयोर्दक्षिणोत्तरांतरेसाध्यमानेसमदृशोरंतरंभिन्नदिशोर्योगःकर्तव्यः संस्कारलक्षणंतुसमदिशोर्योगोभिन्नदिशो
रंतरमित्यतोव्यस्तशरापमांशैरित्युक्तं एवमत्रदक्षिणोत्तरमंतरंनिरक्षदेशीयंजातं तत्स्वदेशीयकरणार्थंफलंनृपगुणति
थिरित्याद्युत्पादितं तद्यथा रवेरुदयेस्तेश्रृंगोन्नतौचंद्रोदयात्स्वस्वस्तिकेतदातयोर्दक्षिणोत्तरांतरमक्षांशाएव अथेष्टस्था
नस्थेचंद्रेनुपातः यदित्रिज्यातुल्यया १२० व्यर्कैंदुदोर्ज्ययाअक्षांशतुल्यमंतरंतदेष्टदोर्ज्ययाकिमिति अत्रतिथिर्द्वादश
गुणाव्यर्कैंदुदोर्भागाः तेद्विगुणादोर्ज्यासाक्षांशगुणात्रिज्याभक्ताकृता तत्राक्षांशस्थानेपलभागृहीता तेनपलभापंचगु
णापलभावर्गदशांशोनाक्षांशाःस्युरिति प्रथमंपंचगुणःकिंचिन्न्यूनोग्राह्यइत्यत्राधिकएकगृहीतः सत्र्यंशाःपंच ५ । २०
एवंतिथेर्गुणाः १२ । २ अत्रयोगुणानांघातोजातोगुणः १२८ त्रिज्याहरः १२० गुणहरावष्टभिरपवर्तितौजातोगु
णः १६ हरः १५ पलभागुणाशरकुहृतिजातं अत्रस्थानद्वयेंतरंजातंयतोद्विगुणभागाः सर्वभुजभागेषुदोर्ज्यानभ
वतिसत्र्यंशपंचगुणपलभातुल्याअक्षांशानभवंति यतःपंचगुणपलभायान्तरपलभागदशांशोन्यूनोस्ति तेनप्रतितिथि
कियदंतरमितिज्ञानार्थमुपायः अत्रस्थानद्वयेंतरमेकमक्षांशेपुपलभागदशांशतुल्यं द्वितीयस्थानेद्विगुणभागादोर्ज्ये
तिस्थानद्वयेंतरमधिकमस्ति वर्गात्मकंयदंतरंतिथिवर्गपंचदशांशतुल्यमधिकमस्ति तेनप्रथमंनृपगुणतिथिष्वेवही
नस्तिथिवर्गःकृतः यतोग्रेपंचदशहरोऽस्त्येव अतःनृपगुणतिथिःस्वघ्नतिथ्योनाक्षभाघ्नीशरकुहृद्वलनंभवतीत्युपपन्नं व्य
स्तदिक्कार्थमुदगाशाएवंसंस्कारदिग्वलनंजातं अत्रक्रांतिशराक्षांशानांसंस्काराज्जातंवलनमंशाद्यं तस्यांगुलीकरणार्थ
मुपायः प्रतिपदंतेरविचंद्रांतरंद्वादशभागाः तत्रषडंगुलतुल्यंबिंबार्धं यदिद्वादशभागैःषडंगुलानि तदेष्टवलनभागैः

किमिति अत्रगुणहरौगुणेनापवर्त्यजातोहरः २ पुनरन्योनुपातः द्वादशभागप्रमाणेनयद्यर्यंहरः२तदेष्टव्यर्केंदुदोर्भागैःकि मिति व्यर्केंदुदोर्भागषडंशोवलनस्यहरः द्वादशतुल्येरविचंद्रांतरेएकतिथिः तत्रद्वयंहरः एकतिथ्याद्वयंहरस्तदेष्टतिथ्याकि मिति अतोद्विनिघ्नतिथ्याविहृतेत्युपपन्नं अथसितोपपत्तिः अत्ररविचंद्रयोःपादेनषट्काष्टलवांतरेअर्धबिंबंसितंभ वति अतःसार्धसप्ततिथिषुबिंबार्धंसितंषडंगुलतुल्यं तेनानुपातः यदिसार्धसप्ततिथिभिःषडंगुलतुल्यंसितंलभ्यतेतदेष्ट

चंद्रस्यचव्यस्तशरापमांशैर्द्विनिघ्नतिथ्याविहृतांगुलाद्यम् ॥ संस्कारदृक्कंवलनं स्फुटंस्यात्स्वेष्वंशहीनास्तिथयःसितंस्यात् ॥ ३ ॥ उन्नतंवलनाशांयामन्य- स्यांस्थान्नतंविधोः ॥ वलनस्यांगुलैःशृंगंकिमत्रपरिलेखतः ॥ ४ ॥

तिथिभिःकिमिति तिथयोयावत्षड्गुणाःसार्धसप्तभक्ताःक्रियंतेतावत्स्वपंचमांशहीनाएवभवंतीत्युपपन्नम् ॥ ३ ॥ अथकस्यांदिशिशृंगौच्यमितिवदति वलनस्ययादिक्तस्यांशृंगोन्नतत्वं अन्यस्यांदिशिचंद्रस्यशृंगंनतंस्यात् वलन स्यांगुलैःशृंगौच्यपरिमाणंज्ञेयं अत्रपरिलेखतःकिंसाध्यंकिमर्थंजडकर्मकर्तव्यमितिभावः अत्रोपपत्तिः सूर्यान्यदिशि वलनमतोवलनान्यदिश्येवशृंगोन्नयनं अत्रवलनंव्यस्तदिक्कमस्त्यतोवलनदिश्येवशृंगौच्यं वलनांगुलतुल्यमेवशृंगौच्यं वलनाभावेशृंगेसमानेभवतः अत्रपरिलेखःशृंगोन्नतिदिग्ज्ञानार्थंकर्तव्यः तत्शृंगोन्नतिदिग्ज्ञानंशृंगौच्यपरिमाणंचव

लनतएवजातं अतःकिमर्थंपरिलेखःकर्तव्यइत्युक्तम् ॥ ४ ॥ दैवज्ञवर्यस्यदिवाकरस्यसुतेनमल्लारिसमाह्वयेन ॥ वृत्तौ कृतायांग्रहलाघवस्याभूच्चंद्रशृंगोन्नमनाधिकारः ॥ १ ॥ इतिश्रीग्रहलाघवस्यटीकायांमल्लारिदैवज्ञ० चंद्रशृंगोन्नत्य धिकारोद्वादशः ॥ १२ ॥ अथग्रहयुत्यधिकारोव्याख्यायते ॥ पंचप्रसिद्धाः ऋतवःषट् अगाःसप्त अंकाःनव विशिखाःपंच एतेंकाःपृथक्ईशानामेकादशानांकर्णस्यचयः अयोगोनामांतरंतेहताः ततःक्रमात्प्रकृत्याद्यंकभक्ताः प्रकृतिरेकविंशतिः भानवोद्वादश अरयःषट् सिद्धाश्चतुर्विंशतिः रामास्त्रयः एभिर्भक्ताःयदंगुलाद्यंफलंतेनपृथक्तेंकाः

पंचर्त्वगांकविशिखाः५।६।७।९।५पृथगीशकर्णा११योगाहताःप्रकृतिभान्वरि-

सिद्धरामैः२१।१२।६।२४।३ भक्ताःफलोनसहिताःश्रवणेधिकोनेतन्युद्भृताः

स्युरसृजोवपुरंगुलानि ॥ १ ॥

ऊनसहिताःकार्याः कर्णेएकादशाधिकेऊनाः ऊनेसहिताः ततस्तेत्रिभक्ताः असृजःसकाशात् भौमादीनांअंगुलात्म कानिबिंबानिभवंतीत्यर्थः अत्रोपपत्तिः अत्रातींद्रियदृग्भिराद्यैराचार्यैस्त्रिज्यातुल्येशीघ्रकर्णेभौमादीनांबिंबांगुलानि लक्षितानि तान्येवाचार्येणपंचादीन्युक्तानि तेषांस्पष्टीकरणंयथा अंत्यफलज्यातुल्येनत्रिज्याशीघ्रकर्णांतरेणय दिबिंबत्रिभागतुल्यह्रासवृद्धिर्लभ्यते तदेष्टेनत्रिज्याशीघ्रकर्णांतरेणकिमिति अत्रबिंबानांअंत्यफलज्याहरः अत्रत्रि ज्याभवमिता अतःभवशीघ्रकर्णांतरंगुणः अत्रयथाभौमस्यांत्यफलज्या ७७ इयंत्रिगुणाजातोहरः २३१ यदि

खार्कमितेव्यासार्धेअयंहरःतदैकादशतुल्येव्यासार्धेकइत्यतोयंहरः २३१ एकादशगुणः २५ ४१ खार्कभक्तोजा
ताएकविंशतिर्भौमस्यहरः एवंसर्वेषामेवफलेनतएवोनसहिताइति दूरस्थेग्रहेबिंबंलघुत्रिज्याधिकेकर्णेग्रहहरंस्थितं
अतस्तत्रोनंसमीपेबिंबाधिक्यं तत्रत्रिज्यातःकर्णोनता अतस्तत्रयुक्तमित्युक्तं तद्बिंबंकलाद्यंअंगुलादिकरणायत्रि
भिर्भक्तं यतःकलात्रयेणैकमंगुलंभवति ॥ १ ॥ अथग्रहयुतेर्गतैष्यताज्ञानमाह ययोर्ग्रहयोर्युतिःसाध्यते त

अधिकजवखगेधिकेल्पभुक्तेरथकुटिलेल्पतरेनुलोमतोवा ॥
अनृजुगखगयोस्तुशीघ्रगेल्पेयुतिरनयोःप्रगतान्यथानुगम्या ॥२॥
ऋजुगतिखगयोस्तुवक्रयोर्वाविवरकलागतिजांतरेणभक्ताः ॥
गतिजयुतिहृतायदैकवक्रीयुतिरगताप्रगताप्तवासरैःस्यात् ॥३॥

योर्मध्येयःअधिकगतिर्ग्रहःसचेत् अल्पगतेर्ग्रहात्अंशाद्यवयवेनाधिकः तदातयोर्युतिगतेतिवाच्यं अथवाकुटिलेवक्रि
णिग्रहेअनुलोमितोमार्गिग्रहात् अल्पतरेसतियुतिर्गतावाच्या अनृजुखगयोर्द्वयोर्वक्रिणोर्ग्रहयोर्मध्येशीघ्रगतोग्रहेभा
गादिनाअल्पेयुतिर्गतैववाच्या अन्यथोक्तलक्षणवैपरीत्येग्रहयुतिर्गम्येत्यर्थः अत्रोपपत्तिःप्रत्यक्षसुगमा ॥ २ ॥
अथग्रहयुतिदिवसज्ञानमाह मार्गिणोःद्वयोर्ग्रहयोःसतोः अथवावक्रयोर्द्वयोःग्रहयोःसतोः तदंतरंकलाःकार्याः ताः
गत्यंतरेणभक्ताः यदैकोवक्रीपरोमार्गी तदाप्यंतरकालागतियोगभक्ताःकार्याः आप्तैर्दिनैःग्रहयुतिर्गम्यागतापूर्वोक्त

लक्षणेनस्यात् अत्रोपपत्तिर्यदिगत्यंतरकलाभिःएकंदिनंतदाग्रहांतरकलाभिःकिमिति वक्रिणिगतियोगएवांतरमिति अ
वस्तत्रतेनैवाप्ताः लब्धदिनैःएष्यगतैःग्रहयुतिसमयःस्यादित्युपपन्नम् ॥ ३ ॥ अथग्रहयोर्दक्षिणोत्तरदिक्संस्थानंतदं
तरंचसाधयति ग्रहयुतेर्येदिवसाःसमागतास्तैर्दिवसैःस्वगत्याग्रहौचाल्यौ तौराश्याद्यवयवेनसमौस्तः अत्रचंद्रस्यशरः
स्वनत्यासूर्यग्रहणोक्तरीत्याकृत्यतयासंस्कार्यः ग्रहौस्वशरदिशौज्ञेयौ यस्यग्रहस्यशरःउत्तरः सग्रहउत्तरस्यां यस्यद
क्षिणःशरःसदक्षिणस्यामिति द्वयोःशरयोःसमदिशोःसतोःयःअल्पबाणःग्रहःसःअधिकशरग्रहात्अन्यदिशिज्ञेयः इ

चाल्यौखेटौसमौस्तोग्रहयुतिदिवसैश्चंद्रबाणःस्वनत्यासंस्कार्योत्रग्रहौस्वे-
षुदिशिसमदिशोस्त्वल्पबाणोपरस्याम् ॥ एकान्याशौयदेषुविरहितसहि-
तौखेटमध्येंतरंस्याद्भेदोमानैक्यखंडादिहलघुनितदाल्पंहिकिंलंबनाद्यम् ॥ ४ ॥

षूग्रहयोःशरौयदाद्वावपिएकदिशौतदातयोरंतरंकार्यं यदाभिन्नदिशौवदातयोर्योगः ग्रहयोर्मध्येतद्दक्षिणोत्तरमंतरंअं
गुलात्मकंस्यात् चतुर्विंशतिभक्तंचेद्धस्तात्मकमपिस्यात् इहशरांतरेग्रहयोर्मानैक्यखंडात्लघुनिअल्पेसतिग्रहबिंबयो
र्भेदःस्यात् तदासूर्यग्रहणवत् अल्पंलंबनाद्यं अत्रकिंकर्तव्यंअल्पबिंबत्वात्स्पर्शादिनोपलभ्यतएव अतोलंबनादिजड
कर्मकिमर्थंकार्यमितिभावः अत्रोपपत्तिः ग्रहयुतिदिवसाःग्रहयोरंतरेगतिवशात्साधिताः तैःदिवसैश्चालितौग्रहौसमौ
भवतएवेतिप्रत्यक्षं अत्रचंद्रेणसदान्यग्रहस्ययोगेसाध्ये चंद्रशरःस्वनत्यासंस्कार्यएव यतोनतिरपिदक्षिणोत्तरमंतरं अ

त्रापिग्रहकक्षयोर्भिन्नत्वंद्रष्टुर्भूपृष्ठगतत्वंचेतिहेतुद्वयंवर्ततएव अतश्चंद्रशरोनत्यासंस्कार्यइतियुक्तं ग्रहौस्वशरदिशावे वभवतः शरयोर्दिक्साम्येअल्पबाणःअधिकबाणात्अन्यदिशिभविष्यत्येव अथग्रहयोर्दक्षिणोत्तरमंतरंसाध्यं तत्तुश रांतरतुल्यंक्रांत्यंतराभावात् अतःएकदिशोःशरयोरंतरंकार्यं अन्यदिशोःस्तशरयोर्योगंविनांतरंनसिध्यत्यतोयोगःकार्य इतिदक्षिणोत्तरमंतरंस्यात् सएवग्रासस्थित्यादिसाधनार्थंस्पष्टःशरःमानैक्यखंडात्न्यूनेशरेग्राह्यग्राहकबिंबसंयोगःस्या त् तदाधस्थोग्रहःचंद्रःऊर्ध्वस्थोरविरित्यादिप्रकल्प्य अकल्पितार्कादिवलग्नादिकृत्वालंबनादिसाध्यं तत्स्पर्शादिका

नंदघ्नायनभागतुल्यघटिकोनाःसार्द्धविश्वे १३।३० तथातारास्तावति
साग्रयोगविगमेपातोव्यतीपातकः ॥ ज्ञेयोवैधृतिरत्रयातघटिकाः
सर्वर्क्षनाडीहताःस्पष्टाःस्युःशरषड्हता६५ इहतमोर्कौसायनांशौकुरु ॥ १ ॥

लेद्यं तेस्पष्टाःस्युः इत्यादिबिंबस्वल्पत्वात्स्पर्शादेर्दर्शनाभावात्किमर्थंजडकर्मकार्यमित्याचार्येणोक्तम् ॥ ४ ॥ दैवज्ञ वर्यस्यदिवाकरस्यसुतेनमल्लारिसमाह्वयेन ॥ वृत्तौकृतायांग्रहलाघवस्यजातःखगानांमिलनाधिकारः ॥ १ ॥ इति श्रीग्रहलाघवस्यटीकायांग्रहयुत्यधिकारस्त्रयोदशः समाप्तः ॥ १३ ॥

अथपाताधिकारोव्याख्यायते ॥ नवभिर्गुणितायेअयनांशाःतत्तुल्याघटिकाःस्युः ताघटिकाःषष्टिभक्ताःऊर्ध्वस्थाने योगाअपिभविष्यंति तदूनाःसार्धविश्वयोगाः१३।३० अथसप्तविंशतियोगाः २७ तदूनःकार्यः तावान्सावयवेयो

गः यस्मिन्कालेप्रतिमासेभविष्यति तस्मिन्कालेक्रमात्व्यतीपातःवैधृतिश्चपातोविज्ञेयः अत्रसार्धास्त्रयोदशोनास्तत्र व्यतीपातः यत्रसप्तविंशतिस्तत्रवैधृतिरिति अत्रयोगस्ययाःयातघटिकाःताःतद्दिनजसर्वनक्षत्रनाडीभिर्गुण्याः शरष ड्भिःपंचषष्ट्याभक्ताःसत्यःस्पष्टाःस्युः इहास्मिन्कालेतमोर्कौराहुसूर्यौसायनांशौकुरु अत्रपातसाधनेऽमुनाचार्येणराहा वयनांशाःदेयाः रवौचदेयाः ततोविराह्वकात्शरःखंडानिचसंधिविचारश्चकृतः इदमल्पबुद्धीनामयुक्तमिवप्रतिभाति यतोयनांशसंस्कारःक्रांतावेवनशरसाधने अतएवकरणकुतूहले 'विनासपातेंदुमिहायनांशकैर्युतोरविःशीतकरश्चगृह्य ते' इति तेषांभ्रांतिनिरासार्थमुच्यते अत्रपातःसायनचंद्रसूर्ययोगोद्वादशराशिषड्राशितुल्यएव तदर्थमत्राचार्येणचंद्रं विनैवसूर्यराहुभ्यांपातसाधनंकृतं तेनसायनःसूर्यःसायनराहुयुतःशरार्थमंगीकृतः सचादत्तायनांशचंद्रस्यादत्तायनांश राहूनितस्यभुजरीत्यासमानएवभवति अत्रोदाहरणंयथा अयनांशाः १८ गणितागताःसूर्यचंद्रराहवः सूर्यः १।१२ चंद्र ३।१२ राहु ५।७ अत्रव्यगुचंद्रः १०।५ सायनाःसू२ चं ४ रा ५।२५ अत्रराहुयुतःसूर्यः ७।२५ अस्यभुजः १।२५ व्यगुचंद्रस्य १०।५ भुजेनतुल्योभवति १।२५ अतस्तमोर्कौसायनांशावितियुक्तमुक्तं पातकालेसिद्धेतत्कालीनसूर्यचंद्र राहवःसाध्याः ततःशरसाधनार्थंअदत्तायनांशराहूनितादत्तायनांशचंद्रादेवशरःक्रांतिसंस्कारार्थंसाध्यः अथवासाय नचंद्रसायनराहुभ्यामेवशरःसाध्यः सशरःनिरयनांशाभ्यांसाधितेनतुल्यएवभवति यतःतुल्ययोःक्षेपयोःक्षिप्तयोःअंतरे केवलयोरंतरमेवसिद्धं अत्रोपपत्तिः पातोनामरविचंद्रयोःक्रांतिसाम्यं तत्रचंद्रक्रांतिःशरसंस्कृतासूर्यक्रांत्यायदासमा स्यात् तदापातमध्यकालः तत्रादौरविचंद्रयोर्मध्यमक्रांतिसाम्यंसाधयति मध्यमक्रांतिसाम्यंतयोर्भुजसाम्येस्यात् भुज

साम्यंतुरविचंद्रयोः षड्राशितुल्येद्वादशराशितुल्येयोगोभवति नन्वेवंचेत्तदा रविचंद्रयोःषड्राशितुल्येद्वादशराशितुल्ये अंतरेपिभुजसाम्यात्क्रांतिसाम्यमस्ति तत्रापिपातःतर्हिमासमध्येपादचतुष्टयंवक्तव्यं सत्यं तत्रपातकालेस्नानदानादिकफलमाचार्येणोक्तमस्ति तत्अस्मिन्नेवपातद्वयेउक्तमस्ति अतस्तद्द्वयंनोक्तं अतोरविचंद्रयोगादेवपातःसाध्यइतियुक्तमुक्तं पांचांगयोगोपिरवींदुयोगादेवसिद्धोस्ति अतस्तस्मादेवपातःसाध्यते चक्रार्धतुल्येयोगेसार्धत्रयोदशयोगाः चक्रतुल्येयोगेसप्तविंशतियोगाः अतस्तएवांगीकृताः अत्रयोगःनिरयनांशात् क्रांतिःसायनांशात् अतोत्रयोगेद्विगुणायनांशोत्पन्नयोगःन्यूनीकर्तव्यः निरयनांशयोगयोर्योगरूपकृतत्वात् यदिचक्रांशैः ३६० सप्तविंशतियोगाः २७ लभ्यंते

गोलैक्येसाग्वर्कभान्वोःसदास्यात्पातोन्यत्वेचेद्रवेर्बाहुभागाः ॥
पंचेषुभ्यो ५५ ल्पास्तदास्त्येवपातःपुष्टाश्चेत्तत्संशयस्तंचभिद्यः ॥ २ ॥

तदाद्विगुणायनांशैःकिमिति फलंयोगाः तस्यघटीकरणार्थंषष्टि ६० गुणः एवमयनांशानांद्वयंषष्टिःसप्तविंशतिरितिगुणत्रयंतद्घातोजातोगुणः ३२ ४० हरश्चक्रांशाः ३६० एवंगुणहरौहरेणापवर्त्यलब्धाःगुणस्थानेनव अतोनवगुणायनांशतुल्यघटीभिःसार्धत्रयोदशसप्तविंशतिश्चोनास्तत्तुल्ययोगेगतेपातःस्यादित्युपपन्नं अत्रयोगाधःस्थलेघटिकाःमध्यमाः तासांस्पष्टीकरणायानुपातः यदिपराभिःपंचषष्टिमिताभिःसर्वर्क्षघटिकाभिःएताःयोगघटिकाःतदेष्टसर्वर्क्षनाडीभिःकिमिति अत्रपातेसायनांशस्यैवप्रयोजनमतःसायनांशावेवकार्यावित्युपपन्नम् ॥ १ ॥ अथपातस्यसंभवासंभवविचारमाह साग्वर्कभान्वोःसराहुरविमूर्यंयोःएकगोलत्वेसतितदापातःस्यादेव अन्यत्वेभिन्नगोलत्वेसतिरवेर्भुजभागाः यदापं

चेषुभ्यः अल्पाः तदा पातोस्त्येव चेत्पंचपंचाशदधिकाः तदा तस्य पातस्य संशयः अस्ति नास्ति वेति तमपि संशयं भिन्नो नाशयामइति सराहुसूर्ययोरेकपदत्वे खाभ्रेंदुद्विरसाइति खंडानि स्युः पदभेदे त्र्यगरुद्रभूपतिनखाख्यक्षीणि खंडानि स्युः अत्र क्षेपः षड्भागाः प्रथमस्य द्वितीयस्य दश अर्कस्य ये कोटिलवाः सूर्यस्य कोट्यंशाः तेषां यः इष्वंशः पंचमांशस्तत्प्रमाणानां खंडानामैक्यं कार्यं तत्खंडैक्यं शेषाणामेष्यखंडस्य च यो वधस्तस्य यः इषुभागः पंचमांशस्तेन सहितं क्षेपयुक् च कृतं तत्संधिर्भवति एवं

खाभ्रेंदुद्विरसाधृतिर्नगशराः ०।०।१।२।६।१८।५७ साग्वर्कभान्वोः पदैक्ये यर्धा-
न्त्र्यगरुद्रभूपतिनखाख्यक्षीणि ३।७।११।१६।२०।२३ भेदे क्रमात् ॥ क्षेपः
षड्दश ६।१० चार्ककोटिजलवेष्वंश ५ प्रमांत्यैक्यकं शेषांशैष्यवधेषुभागसहितं
संधिर्भवेत्क्षेपयुक् ॥ ३ ॥ साग्वर्कभुजांशका यदाल्पाः संधेः क्रांतिसमत्वम-
स्ति चेत् ॥ अधिकानतदा भुजांशसंध्यंतरसाद्दृश्यमिहापमांतरं स्यात् ॥ ४ ॥

यत्र साग्वर्कस्य भुजांशकाः संधिभागेभ्यः अल्पाः तदा क्रांतिसाम्यमस्ति चेत्संधितोधिकाः तदानुपातः अत्र भुजांशानां संधेश्चयदंतरं तत्समानं क्रांत्यंतरं स्यादित्यर्थः अत्रोपपत्तिः अत्र व्यतीपाते रविचंद्रयोर्गोलैकत्वं वैधृते गोलान्यत्वं उभयत्रापि साग्वर्कभान्वोर्गोलैकत्वे विराहुचंद्रोत्पन्नशरसंस्कृतेंदुक्रांतिः रविक्रांत्यग्रे पृष्ठे चासन्नैव भवति चयापचयहेतुभूतत्वात्साग्वर्कयोर्गोलान्यत्वे चंद्रपरमशरेण ३।४० चंद्रस्य परमक्रांतिः २४ हीना १९।३० अस्याः क्रांतेरूनायां रविक्रांतौ क्रां

तिसाम्यंभविष्यत्येव एतावतीरविक्रांतिःकैर्भुजभागैर्भविष्यतीतिज्ञानार्थंधनुःकरणरीत्याज्ञाताभुजभागाः ५५ एभ्यो
ल्परविभुजभागेषुक्रांतिसाम्यमवश्यमस्त्येव पंचपंचाशदधिकभुजभागेषुभावाभावविचारः तत्रपंचपंचाशदधिकभु
जभागप्रयोजनात्रवेःकोटिभागाएवकार्याः तेपरमाःपंचत्रिंशत् ३५ तत्रभुजभागपरमत्वेकोटयंशाभावात्शून्यमितान्
रविकोटयंशान्प्रकल्प्यपातविचारःकृतः तत्रसराहुसूर्ययोः पदैकत्वेसराहुसूर्यभुजभागेषुषडूनेष्वेवपातः अतोरविको
टयंशेषुशून्यतुल्येषुषट्तुल्यःसंधिः एवंपंचतुल्यरविकोटयंशेष्वपिषट्तुल्यएवसंधिः एवंपंचोत्तरान्भागान्प्रकल्प्यसाधि

पदेयुग्मौजेर्कः सम विषमगोलः सतमसस्तदायातः पातस्त्वगतइतरत्वेनिगदितात् ॥
विभिन्नेगोलेचेदिहकृतशरांघ्रेर्लघुतरारवेर्दोर्भागाः स्यादिहरविपदान्यत्वमुचितम् ॥ ५ ॥

तसंध्यंशानधोविशोध्यषडूनान्कृत्वाखंडानिपंचत्रिंशदंशमध्येसप्तपठितानि एवंतयोःपदान्यत्वेषष्ट्यधिकेभुजभागेषुत्रिं
शन्मितकोटयंशमध्येषट्संधिखंडानिदशोनानिकृत्वापठितानि मध्येनपातः पंचभागैर्यदिभोग्यखंडंतदाशेषभागैःकि
मिति षड्दशघ्नोनाःकृताः अतःसक्षेपःयोज्यएव एवंजातोभागाद्यःसंधिःसंधितः सराहुसूर्यभुजभागेष्वल्पेषुपातःना
धिकेष्वित्युपपन्नं भुजांशानांसंध्यंशानांयदंतरंतत्तुल्यमेवक्रांत्योरंतरमित्यर्थतएवसिद्धम् ॥ २ ॥ ३ ॥ ४ ॥
अथपातस्यगतागतलक्षणमाह अर्कःसूर्यःयदियुग्मपदेवर्तते सराहुसूर्यात्समगोलेपिचेत्स्यात्तदापातःयातोज्ञेयः अ
थवारविःओजपदेसराहुसूर्यात्भिन्नगोलेचेत्तदापियातःगतःस्यात् निगदितात्उक्तलक्षणात्इतरत्वेअन्यथात्वेअगतः

गतः ऽष्यः पातः स्यात् सराहुसूर्यात्सूर्यश्चेत्भिन्नगोलेतदाकृतोगणितागतोयः शरः तस्ययः अंघ्रिः चतुर्थांशः तस्माद्रवेर्भुज भागाः लघुतराः अल्पाः स्युस्तदारविपदस्यअन्यत्वमुचितं अत्रोपपत्तिः अत्ररविचंद्रयोः भुजसाम्यात्रविरेवांगीकृतः रविः यदायुग्मपदेतदातस्यक्रांतिरपचीयमाना तत्रसराहुसूर्यात्समगोलत्वेपिसमदिशाशरेणयुक्तापिसाक्रांतिः अग्रेर विक्रांत्यानसमास्यात्अतः तत्रपातोगतोज्ञेयः ओजपदेवर्तमानस्यक्रांतिरुपचोयमानासासराहुसूर्यभिन्नगोलत्वेसतिभि न्नदिशाशरेणांतरिताप्यग्रेसूर्यक्रांत्यानसमास्यात् अतः तत्रापियातः स्यात्तदन्यथात्वेगम्यः पातइत्युपपन्नं अत्रचंद्र

पंचधासागराः पंचधावह्नयोद्वौचतुर्धाकुभूखाभ्रमंकाइषोः ४।४।४।४।४।३।३।३।३।३।२
२।२।२।१।१।०।० साग्विनाद्दोर्लवेष्वंश ५ तुल्यैक्यकंशेषभोग्याहतीष्वंशयुक्स्यात्शरः॥ ६ ॥

स्यगोलसंधिः साध्यः तत्रचंद्रोनकृतः रविरेवास्ति चंद्रः भुजसाम्यात्शरेणकृत्वागोलान्यत्वसंभवः संधौ तत्रशरा द्भुजभागाः साध्यंते परमक्रांत्या २४ त्रिज्यातुल्यादोर्ज्यातदेष्टशरतुल्यक्रांत्याकेति एवमिष्टदोर्ज्या तस्याधनुः करणार्थं मुखार्थंद्वौहरः शरांकानांदशगुणत्वात्दशहरः एवमत्रहरघातोहरः ४८० त्रिज्या गुणः तेनैवापवर्तनेजातः शरस्यहरः ४ एवं चतुर्भक्तशरादल्पभुजभागेषुभिन्नगोलत्वात्पदान्यत्वंभविष्यतीतियुक्तं तेनकृतशरांघ्रेर्लघुतरारवेर्दोर्भागाइत्युपपन्नम् ॥५॥ अथपातसाधनेहेतुभूतंशरंखंडकैः सूक्ष्मंसाधयति इषोः शरस्यएतेंकाः स्युः सागराश्चत्वारः पंचधा वह्नयः त्रयस्तेपिद्वौ चतुर्धा ततः कुभूखाभ्रंकुरेकः भूरेकः खंशून्यंअभ्रंशून्यं एतेषांसमाहारः तत्तथा ततः साग्विनात्सराहुसूर्यात्दोर्लवानांभु

जभागानांइष्टवंशःपंचमांशःतत्तुल्याःयेगतांकाःतेषामैक्यंकार्यं ततःशेषांशानांभोग्यांकस्यचयाहतिःतस्याःयःपंचमांश
स्तेनयुक्तःशरःस्यादित्यर्थः अत्रोपपत्तिः शरस्वरूपंपूर्वमेवप्रतिपादितमस्ति अत्रपंचपंचभागानांशरभागादिकमुत्पा
द्यसावयवत्वाद्दशभिःसावर्ण्यसिद्धान्नवतिभुजभागानामष्टादशशरांकानाचार्यःप्रोक्तवान् मध्येतत्रानुपातः यदिपंच
भिर्भुजभागैरेकःशरांकोलभ्यते तदेष्टभुजभागैःकियंतइति अतउक्तं भुजभागपंचांशतुल्यगतांकैक्यंकार्यं शेषाणामनु
पातः पंचभिर्भागैःभोग्यखंडंलभ्यते तदाशेषभागैःकियंतइति अतःशेषभोग्यखंडवधपंचमांशेनयुक्तं तदैक्यंशरःस्या

खैकादिकेरविभुजांशदशांशकेस्याद्धारोर्कसूर्यमनुधृत्युडवोंगरामाः ॥
खाश्वाद्विशत्युडुगणा १२।१२।१४।१८।२७।३६।७०।२००।३२७
स्तुशराद्धराप्याहीनोत्रसद्मपमसंस्कृतयेस्फुटःस्यात् ॥ ७ ॥

दित्युपपन्नम् ॥ ६ ॥ अथास्यशरस्यक्रांतिसंस्कारयोग्यत्वार्थंस्पष्टत्वमाह रवेर्भुजांशाःयेस्युः तेषांयोदशमांशः
तस्मिन्खैकादिकेशून्यैकादिसमेसतिक्रमादयंहरःस्यात् अर्कोद्वादश पुनःसूर्यःद्वादश मनवश्चतुर्दश धृतिरष्टादश उडू
निसप्तविंशतिः अगरामाःषट्त्रिंशत् खाश्वाःसप्ततिः द्विशतीप्रसिद्धा उडुगुणाःसप्तविंशत्यधिकशतत्रयं एवमत्रशरा
त्क्रमप्राप्तहरेणयालब्धिःतयासएवशरःहीनःसन्क्रांतिसंस्कारयोग्यःस्पष्टःशरःस्यादित्यर्थः अत्रोपपत्तिः अत्रक्रां
तिध्रुवाभिमुखीअतःसाकोटिरूपाशरः कदंबाभिमुखःसकर्णरूपः अतःक्रांतिसंस्कारार्थंशरस्यकर्णरूपस्यकोटिरूप

त्वंकार्यं तद्यथा यदित्रिज्याकर्णेद्युज्याकोटिःतदाशरकर्णेकाकोटिरिति जातःकोटिरूपःशरः एवमत्रद्युज्याकार्या द्युज्यानामद्युरात्रवृत्तव्यासार्धं तत्रक्रांतिज्याभुजः द्युज्याकोटिः त्रिज्याकर्णः एवंक्रांतिज्यावर्गोनस्त्रिज्यावर्गोद्युज्यावर्ग स्तन्मूलंद्युज्येतिकर्तव्यं अत्रेदंजडकर्मदृष्ट्वा आचार्येणदशदशभागानांद्युज्याःसाधिताः तत्रप्रथमंदशभागानांक्रां तिज्यायांक्रियमाणायांसत्रिराशिग्रहःकार्यः एवमत्रसत्रिराशीनांदशभागानांद्युज्या ११० शरोनेनगुण्यः स्वार्कमि तित्रिज्यया भाज्यः गुणहरौदशभिरपवर्तितौ जातोगुणःएकादश ११ हरोद्वादश १२ योराशिरेकादशभिर्गुण्यतेद्वा

चतुर्धानखागोभुवोद्विर्गजाब्जानृपाष्टींद्रविश्वार्कदिग्वस्वगाक्षाः ॥

त्रयःक्ष्मापमांकाःक्रमादर्कबाहोर्लवेष्वंशतुल्योगतोन्यस्यशेषम् ॥ ८ ॥

दशभिर्भज्यते सस्वद्वादशांशहीनएवभवति एवंसर्वेपिहराउत्पादिताः अतःशरःस्वहरलब्ध्याहीनःक्रांतिसंस्कारयो ग्यःस्पष्टोभवतीत्युपपन्नम् ॥७॥ अथक्रांतिःकर्तव्यताप्रकारंखंडैरेवाह एवंअपमस्यक्रांतेरंकाःस्युरित्यन्वयः नखाविं शतिश्चतुर्धा ततःगोभुवःएकोनविंशतिः द्विवारंगजाब्जाःअष्टादश नृपाःषोडश अष्टिःषोडश इंद्राश्चतुर्दश विश्वेत्रयो दश अर्कोद्वादश दिशोदश वसवोष्टौ अगाःसप्त अक्षाःपंच त्रयःप्रसिद्धाः क्ष्माएकः अर्कस्ययोबाहुर्भुजःतस्ययेल वाःतेषांइष्वंशःपंचमांशःतत्तुल्यगतःअंकःस्यात् शेषंन्यस्येतिशेषमेकांतेस्थापनीयमेव अत्रोपपत्तिः क्रांतिलक्षणंपूर्व मेवप्रतिपादितं पंचभागानांक्रांतिभागान्प्रसाध्यसावयवत्वात्दशभिःसगुण्यांकाःपठिताः तत्रानुपातः यदिपंचभिर्भु

जभागैरेकःक्रांतिरेकोलभ्यते तदेष्टभुजभागैःकिमिति लब्धतुल्योगतांकःस्यात् शेषस्याग्रेप्रयोजनमस्त्यतस्तत्स्थाप्यम्
॥ ८ ॥ अतःक्रांतिखंडानांशरखंडानांसंस्थानक्रमंतत्संस्कारंचकथयति उक्ताथेशरस्यतथापमस्यक्रांतिर्यें
काःतान्यथागतानूआदौक्रमात्पश्चादुत्क्रमात्संख्याहिगणय भोग्यात्अर्कात्क्रमतःयथाक्रमंषट्अंकाःगतेपातेगताः
एष्येपातेएष्याःस्थापनीयाः अयनप्रकारस्तुयुग्मपदेओजपदेचयदारविःत्राहुसूर्योवाभवति तदाइदमन्यथाविपरी
तं तद्यथा गतेपातेएष्याः एष्येपातेगताः इमेंकाःअयनदिशःस्युः रविर्यस्मिन्नयनेतद्दिशःक्रांत्यंकाः विराहुसूर्योयस्मि

क्रमोत्क्रमादुक्तशरापमांकान्संख्याहिभोग्यात्क्रमतःषडंकाः ॥
स्थाप्यागतैष्यागतगम्यपातेयुग्मेन्यथौजेस्युरिमेयनांशाः ॥ ९ ॥

न्नयनतद्दिशःक्रांत्यंकाः अंत्याद्विलोमास्तदातेन्यदिशोज्ञेयाः भोग्यादंत्यपर्यंतयेंकास्तेयनदिशः अंत्यादन्येयेउत्क्र
मस्थास्तेविपरीतदिशः उत्तरायणेदक्षिणादक्षिणायनेउत्तराःस्युरित्यर्थः अथशब्दोनंतरवाची क्रांत्यंकशरांकस्थाप
नानंतरंक्रांत्यंकाःशरांकैःसुसंस्कृताःकार्याः अत्रसंस्कारस्तुएकदिशोर्योगोभिन्नदिशोरंतरमितिप्रसिद्धः ततस्तैंकाक्रीं
दुहृतापभैष्यांकेनत्रयोदशभक्तक्रांतिभोग्यांकेनापिसंस्कृताःस्पष्टतराभवेयुरित्यर्थः अत्रोपपत्तिः युग्मपदेखंडानामग्र
उपचयः तत्रचेद्गतःपातः तज्ज्ञानार्थमुपचयभूतांकग्रहणं अतोगतांकस्थापनमुक्तं एष्येपातेएष्यांकस्थापनमर्थतए

वसिद्धं ओजपदेइदंविपरीतंभवति अंकानांचयापचयस्यव्यस्तभूतत्वात्तेंकाःस्वायनदिशिस्युरितिप्रत्यक्षं अत्रशरसं
स्कृतायाःचंद्रक्रांतेःसूर्यक्रांत्यासहयदंतरंतत्ज्ञानार्थंक्रांत्यंकाःशरांकैःसंस्कार्याएव शरस्यप्रथमांकःक्रांतेःप्रथमांकेसं
स्कार्यः एवंद्वितीयोद्वितीये इतिषण्णामप्यंकानांसंस्कारःकार्यएव अन्यच्चसंस्कारांतरं यदिचंद्रगतिप्रमाणेनेदंक्रांति
भोग्यखंडंतदारविगतिप्रमाणेनकिमिति भोग्यखंडंरविगत्यागुण्यंचंद्रगत्याभाज्यं अत्ररविगतिस्त्रयोदशगुणाचंद्रगति
र्भवत्यतःस्थूलत्वात्भोग्यांकाःत्रयोदशभिर्भाज्याः फलंसर्वांकेषुसंस्कार्यं चंद्रगतिसंबंधित्वात् अतस्त्रींदुहृता १३ प

अंत्याद्विलोमायदितेन्यदिक्काअथापमांकाःक्रमशःशरांकैः ॥
सुसंस्कृतास्त्रींदुहृतापमैष्यांकेनापितेस्पष्टतराभवेयुः ॥ १० ॥

मैष्यांकेनापिसंस्कृतास्तेषडंकाःस्पष्टतराणिक्रांत्यंतरखंडानिचंद्रार्कयोर्भवेयुरित्युपपन्नम् ॥९॥ अथपातकालंवृत्तद्वयेन
साधयति प्राक्पूर्वंक्रांतौयेशेषभागाःएकांवेस्थापिताः तेशरैःपंचभिराप्ताभक्ताःसंतोयत्फलंतस्यरूपशुद्धस्यलघुसंज्ञा षडं
कमध्येयःआद्यःप्रथमःस्पष्टांकःसलघुनाहतोगुणितःकार्यः तेनआढ्योयुक्तोयोत्रस्पष्टवाणः तस्मात्तानंकान्जह्यात्शो
धयेत् ततःशुद्धेष्वंकेषुयत्शेषंतत्अशुद्धेनांकेनभक्तंकार्यं तत्फलंविशुद्धखंडानांसंख्यायावतीस्यात् तयासहितंयुक्तंचका
र्यं ततस्तत्लघुनाऊनंत्रिगुणंपुनर्भनाडीभिःनक्षत्रसर्वघटीभिःगुण्यं ततस्तत्इभैरष्टभिराप्तंभक्तंसत् आप्ताःलब्धाःयाःयातै

ष्यानाड्यः तासुपातमध्यः स्यात् यातैष्यलक्षणं पूर्वमेव प्रतिपादितमस्ति मध्यमपातकालात्ताभिः घटीभिः गतोगम्योवापा तमध्यः स्यादित्यर्थः अत्रोपपत्तिः अत्र खंडानि पंचपंचभागानां तेनानुपातः यदि पंचभिर्भागैर्भोग्यांकोलभ्यते तदाशेषां शैः किमिति अतः शेषलवाः शराप्ताः कार्याएव रूपादूनाएवसदास्युरितितेषांभोग्यत्वकरणार्थं तेरूपाद्विशुद्धाइत्युक्तं त स्यलघुसंज्ञाकृता तस्यभोग्यांकोगुणोस्त्यतः लघुनाहतः आद्यः स्फुटांकः कार्यइतिसिद्धं एवंजातंगतेपातेशेषांशोत्थभो

प्राक्स्थापिताः शेषलवाः शराप्तारूपाद्विशुद्धालघुसंज्ञकः स्यात् ॥
आद्यः स्फुटांकोलघुनाहतोयस्तेनाढ्यबाणात्क्रमशोथजह्यात् ॥
॥११॥ तानंककान्शेषमशुद्धभक्तंविशुद्धसंख्यासहितंलघूनम् ॥
त्रिघ्नंभनाडीर्घ्नमभा ८ प्तमाप्तयातैष्यनाडीष्विहपातमध्यम् ॥ १२॥

ग्यखंडमेष्येशेषांशोनपंचांशोत्थंभोग्यखंडंइदमाद्यापरपर्यायान्मध्यक्रांतिसाम्यकालिकशरतुल्यक्रांत्यंतरात्शोध्यं द्वि तीयादिखंडान्यपिशोध्यानि अत्राचार्येणप्रथमखंडंसंपूर्णंशोधितं अतोभोग्योत्थभोग्यखंडंगतेपातेभुक्तांशोत्थभोग्यखंडं गम्येपातेशरेयोज्यं अतः शेषलवाः शराप्ताः रूपाद्विशुद्धाः गतेपातलघुः गम्येशेषांशः शराप्ताएवलघुः स्यादितियुक्तं अतए

वाचार्यलिखितस्तज्जीर्णपुस्तके 'प्राक्स्थापिताःशेषलवाःशरात्तालघुर्भवेद्भूच्युतएष्यपात' इतिपाठोदृश्यते अस्यार्थः एष्यपातेशेषांशशरांशौभूच्युतलघुः गतेकिंकर्तव्यमितिमंदधियांसंशयोभवेदतः 'प्राक्स्थापिताःशेषलवाःशरात्तागम्येल घुर्भूपतितोगतेऽसाविति' पाठोनितांतंरमणीयइतिप्रतिभाति रूपाद्विशुद्धालघुसंज्ञकःस्यादितिपाठस्तुवासनाविरोधादुपे क्ष्यः एवंयावंतोंकाःशुध्यंतितावंतःशोध्याः शेषेणसहअनुपातः यदिअशुद्धांकेनपंचभागाःलभ्यंते तदानेनशेषेणकिमि ति अतःशेषंअशुद्धांकभक्तंकार्यमिति तस्मिन्फलेविशुद्धांकसंख्यायोज्या तत्रपूर्वंलघुःसंयोजितोवर्तते सःनिष्कासनीयए

अविशुद्धहतायमार्कनाड्यः १२२ प्राक्पश्चात्स्थितिरत्रपातमध्यात् ॥
शुद्धाःक्वचिदत्रचेत्षडंकाःसंस्कार्याश्चतदग्रतस्त्रयोंकाः १३ ॥

व तत्कालादेवपातज्ञानार्थंअतोलघूनमिति यदिचंद्रगतिभागैरेभिः १३।१० सर्वनक्षत्रघटिकाःलभ्यंतेतदैभिःशेषभागैः किमिति अत्रशेषस्यसर्वर्क्षनाड्योगुणः अतोभनाडीघ्नमिति अत्रहरस्त्रयोदशसावयवाः १३।१० पूर्वानुपातेगुणःपंच तुल्यस्थितः अत्रसंचारः यदिपंचतुल्येगुणेसावयवास्त्रयोदश १३।१० हरःतदाचार्येणकल्प्यतेत्रिमितेगुणेकोवाहरः ल ब्धाअष्टौअतस्त्रिघ्नमिति भाप्तमिति लब्धघटीभिःगतैष्यंपातमध्यंस्यादित्युपपन्नम् ॥१०॥११॥१२॥ अथपातस्थिति कालमाह अविशुद्धेनांकेनहृताभक्ताःयमार्कनाड्यःद्वाविंशत्यधिकशतमितघटिकाः यत्फलंताभिर्घटिकाभिःपातमध्या त्पूर्वंअग्रतश्चस्थितिःस्यात् तावत्समयंपातस्यकालोस्त्येव अत्रक्वचिद्यदाषडंकाअपिबाणात्शुद्धाःतदाअन्येपित्रयःअं

काःपूर्वोक्तरीत्यासंस्कार्याः अत्रोपपत्तिः स्थितिर्नाममानैक्यखंडतुल्यंयावत्क्रांत्यंतरंभवति तावत्पर्यंतंपातोस्त्येव अथ भाज्यःसाध्यते तत्रपंचदशभागानांकलाः ९०० यदिचंद्रगतिप्रमाणेन ७९० एताःतदारविगतिप्रमाणेन ५९ काइति जाताःकलाः ६७।३० तथामानैक्यखंडस्यमध्यमस्यकलाः ३२।३८ तत्रमानैक्यखंडएतत्कलागुण्यं जातोभाज्यःअप रपर्यायः यदियमांगराम ३६२ मितक्रांत्यापंचदशभागकलाःलभ्यंते ९०० तदामानैक्यखंडतुल्यक्रांत्या ३२।१५ काः चंद्रगतिकलाभिः ७९०।३५ षष्टिघटिकाः ६० तदाभिःकलाभिःकिं यदियमांगराम ३६२ तुल्यभोगखंडेनै तास्तदाअशुद्धेनखंडेनकाः अयमनुपातोव्यस्तः इच्छाह्रासेफलवृद्धेरपेक्षितत्वात् तेनाशुद्धखंडंहरः यमांगरामागुणाः

षड्भार्कभच्युतरविस्त्विहसावनाब्जोथार्कैघटोसमकलाश्चलनंत्वथेंदोः

भक्त्यंशकाभघटिकाप्तखखाह्वयः ८०० स्युस्तच्चालितापमसमत्वमिहप्रतीत्यै ॥ १४ ॥

पूर्वंहरश्चतयोर्नाशः एवंजातोगुणत्रयघातोगुणः १७४१५०० हरः चंद्रगतिःअशुद्धखंडंचचंद्रगत्याऽपवर्तेकृतेजातो भाज्यः २२०३ अयंयमांगरामखंडेनपंचदशभागोत्पन्नेनततोन्योनुपातः यदियमांगरामाणामयंभाज्यः २२०३ त दाचार्योक्तविंशतिमितानांकिमिति जातोभाज्यः १२२ अस्याशुद्धांकोहरोस्त्यतःअविशुद्धहृतायमार्कनाड्यइत्युपप न्नं इयंस्थितिरुभयतःसमामानैक्यखंडतुल्यांतरस्यविद्यमानत्वात् अत्रमानस्थितिमध्येकृतंस्नानजपहोमादिअनंतफल दंभवति यत्रक्वचित्शरबाहुल्यात्षडंकाअपिशुद्धास्तत्रान्येत्रयःसंस्कार्याइतिप्रत्यक्षसिद्धम् ॥ १३ ॥ अथात्रसूर्याचंद्र ज्ञानंवदति । व्यतीपातेपातेयातेरविःषड्राशिभ्यःशुद्धःसन्सायनचंद्रोभवति वैधृतेपातेयातेरविःद्वादशराशिभ्यःशुद्धः

सायनचंद्रोभवति अथसूर्यघटोसमकलाश्चालनंदेयं अथभघटीभिःनक्षत्रसर्वघटीभिःआप्ताःभक्ताःखखाहयःअष्टशता
निइंदोःचंद्रस्यभुक्त्यंशकागतिभागाःस्युः तयागत्याचालितोयश्चंद्रःतस्यापमःशरसंस्कृतःसूर्यापमःकेवलएव अनयोः
समत्वंभतोत्यैस्यात् अत्रोपपत्तिः अत्रव्यतीपातपातेसायनरविशशियोगःषड्राशितुल्यः अतोहिषड्राशिभ्योद्वादशरा
शिभ्यःशोधितःसायनोरविःसायनःचंद्रःस्यादितिमत्यक्षपातकालीनसूर्यकरणार्थपातघटीतुल्याएवकलाःस्वल्पांतरत्वा
त् रवौदेयाइत्युक्तं भघटोभक्ताःखखाष्टौचंद्रगतिःस्यादितिमत्यक्षोपपत्तिः यदिसर्वर्क्षघटीभिःअष्टशतकलाः ८०० त
दाषष्टिघटीभिःकाइति फलंचंद्रगतिकलाःताःषष्टिभक्ताःभागाःस्युः तेनषष्टितुल्ययोर्गुणहरयोर्नाशेभघटिकाप्तखखा

मासाःस्वार्द्धयुतास्तिथेर्दिनाद्यंतावत्योघटिकाश्चमाससंघात् ॥
त्र्यंशाढ्याःसहितंद्वयत्रयाभ्यां २।३ चक्रघ्नाक्षनवांगवर्गयुक्तम् ॥ १ ॥

हयश्चंद्रगत्यंशाइति एवंतत्ररविचंद्रयोःक्रांतिसाम्यंस्यादेवेति ॥ १ ॥ दैवज्ञवर्यस्यदि० ॥ वृत्तौ० पाताधिकारःपरिपू
र्तिमागात् ॥ इतिश्रीग्र०टी० पाताधिकारश्चतुर्दशः ॥ १४ ॥ अथपंचांगानयनचंद्रग्रहणसाधनाधिकारोव्याख्या
यते इष्टमासीयोमासगणोयःतएवमासाः तेस्वार्धयुताःतिथेर्दिनाद्यंवाराद्यंस्यात् तावत्यएवघटिकाःमासगणात्त्र्यंशा
ढ्याःततस्तत्द्वयत्रयाभ्यांसहितंकार्यं चक्रेणगुणाःअक्षाःपंच नवभसिद्धाःअंगवगःषट्त्रिंशत् चक्रगुणेनानेनध्रुवेणयु
क्तंतत्कार्यमित्यर्थः अत्रोपपत्तिः अत्रतिथ्यानयनार्थंमध्यमंतिथिवाराद्यंसाध्यं तत्रचांद्रमासप्रमाणं २९।३१।५०इदंसत्त
तष्टंजातंवाराद्यं १।३१।५० । अत्रानुपातः यद्येकमासेनेदंतदेष्टमासगणेनकिमिति अतोमासगणेनानेनगुण्यः तत्रखं

डगुणनमासगुणतुल्याएववाराः एकंखंडं द्वितीयखंडं० । ३० अतःसार्धयुक्ताःइति घटिकाअपितावत्यः अन्यत्खं
डं०।२० अतस्त्र्यंशाढ्याइति अत्रग्रंथारंभेतिथिवारद्वयंघटीत्रयंचअतस्तद्युक्तमिति एकंचक्रेतिथिवाराद्यं ५।९।३६
पद्येकचक्रेणेदंतदेष्टचक्रेणकिंमिति अतश्चक्रघ्नाक्षनवांगवर्गयुक्तमित्युपपन्नम् ॥ १ ॥ अथनक्षत्रध्रुवकंसाधयति
खंशून्यंसप्तघटिकाः अष्टाविंशतिपलानि एतेचक्रनिघ्नाःकार्याः ततःनागांभोधि ४८ घटीभिर्युक्ताःकार्याः ततस्ते

खंसप्ताष्टयमा ०।७।२८ श्चचक्रनिघ्नानागांभोधिघटीयुताभशुद्धाः ॥
द्वाभ्यांधूर्जटिभिर्विनिघ्नमासैर्युक्ताभध्रुवकोभपूर्वकःस्यात् ॥ २ ॥
स्वर्गाःशरानवचचक्रहताद्विनिघ्नमासान्वितोद्विहृतमासयुताघटीषु ॥
पिंडोभवेद्युगकुभिःखचरैःसमेतस्तष्टोगजाश्विभिरिदंभवतीहचक्रम् ॥ ३ ॥

सप्तविंशतेःशोध्याः द्वाभ्यांधूर्जटिभिर्विनिघ्नाःगुणिताःयेमासाःतैर्युक्ताः भपूर्वोनक्षत्राद्यःनक्षत्रध्रुवकः स्यादित्यर्थः
अत्रोपपत्तिः अत्रैकमासेनक्षत्रध्रुवःसप्तविंशतितष्टः २ । ११ अतोमासाःअनेनगुण्याइति तथैकस्मिन्चक्रेनक्ष
त्रध्रुवकःचक्रशुद्धः ७ । २८ अतोयंचक्रगुणइति क्षेपश्चाशुद्धोयं० । ४८ अतोनागांभोधिघटीयुताइति स्वचक्र
शुद्धत्वात्भशुद्धइत्युपपन्नम् ॥ २ ॥ अथपिंडंसाधयति स्वर्गाःएकविंशतिः शराःपंच नवप्रसिद्धाः एतेचक्रेण
गुणनीयाः ततोद्विगुणमासगणेनयुक्ताःकार्याः पुनःघटीषुद्विभक्तमासगणेनयुक्ताःकार्याःसपिंडोभवेत् युगकुभिः च

तुर्दशभिरूर्ध्वस्थानेखचरैर्नवभिर्घटीषुसमेतःयुक्तःकार्यः ततोगजाश्विभिःअष्टाविंशत्यातष्टःकार्यः अत्रपिंडेअष्टाविंशति
मितंचक्रं अत्रोपपत्तिः पिंडोनामचंद्रमंदकेंद्रं तस्यचक्रमध्येध्रुवोयं२।१।५।९ अतोयंचक्रगुणइतिततोमासध्रुवोयं २।०।३
अतोद्विघ्नमासान्विताःघटीषुद्विहृतमासयुताइतियुगकुभिरित्यादिक्षेपः अतस्तद्युक्तःकार्यः अष्टाविंशतिचक्रत्वात्तत्तष्टः
कार्यइत्युपपन्नम्॥ ३॥अथसूर्यनक्षत्रात्फलघटिकाआह अध ११।१०।८।६।४।२पुऋ०।३।५।७।९।१०।११।१०।१०
९।८।६।३।०उषाध २।४।६।८।९।१०।११अश्विनीनक्षत्रात्एताःसूर्यघटिकाधनंस्युः क्रमात्शिवादयः तथाआदितेया

शिवदशवसुषट्काग्ध्यश्विनाड्योश्विभात्खंखगुणशरनगांकाशेषदिग्दिङ्नवाष्टौ ॥
रसगुणखमिनर्क्षादादितेयादृणंस्युर्द्वियुगरसगजांकाशेश्वरावैश्वतःस्वम् ॥ ४ ॥

तुपुनर्वसुतःएताःखमुख्याःघटिकाऋणं तथावैश्वतःउत्तराषाढातःद्वियुगादयोघटिकाःधनंस्युरिति अत्रोपपत्तिः सूर्यस्यप्र
तिनक्षत्रंसुखार्थंमंदफलकलानांगत्यंतरवशतःघटिकाःकृत्वासिद्धाःपठिताः तासांधनर्णोपपत्तिः अश्विनीमारभ्यपुनर्वसु
पर्यंतंरविमंदकेंद्रंमेषादावतस्तत्रधनं एवंपुनर्वसुतःउत्तराषाढापर्यंतंकेंद्रंतुलादौभवत्यत्रऋणं उत्तराषाढामारभ्याश्विनीप
र्यंतंकेंद्रंमेषादावतस्तत्रापिधनमित्युपपन्नं यत्सूर्येधनंतच्चंद्रेऋणं पुनर्भोग्यकरणेतदधिकमेवभवति इतिसूर्येयादृशंफलंता

द्दशमेवतिथावपीत्युपपन्नम् ॥४॥ अथसूर्यनक्षत्रज्ञानमाह चतुर्गुणाइष्टावर्तमानतिथिःस्वार्कभागयुतातिथेर्द्वादशांशेनयु
तावतःसानक्षत्रध्रुवघटीषुयोज्या तद्वतसूर्यर्क्षंसावयवंचमध्यमंस्यात् ततस्तत्अर्कजाख्याः इदानोमुदितायाःसूर्यनक्षत्रघ
टिकाः ताभ्यांधनर्णत्वेनयुतोनंसत्स्फुटंस्यात् अत्रोपपत्तिः प्रतितिथिनक्षत्रध्रुवसूर्यनक्षत्रयोर्घटिकाचतुष्टयंपंचपलाधिक
मंतरं अतोनुपातः यद्येकयातिथ्येदंतदेष्टतिथिभिःकिमिति अत्रखंडं ४ अन्यत् ०।५ अतोवेदघ्नेष्टतिथिःद्वादशांश
युक्तेत्युपपन्नं इदंभध्रुवेयोज्यं सूर्यनक्षत्रंस्यादेव तन्मध्यमतःसूर्यघटोभिर्मंदफलोत्पन्नाभिःसंस्कृतंस्पष्टंस्यादित्युपप

वेदघ्नेष्टतिथिर्युतार्कभागायोज्याभध्रुवनाडिकासुतत्स्यात् ॥ सूर्यर्क्षविगतंततोर्क
जाख्यनाडीहीनयुतंस्फुटंभवेत्तत् ॥ ५ ॥ पिंडेयुक्ततिथौतदाद्यमनुषुस्वंशेषपिंडे
ष्वृणंविश्वेंदोश्वशरादशाऽर्कयमयोःपंचेंदवःस्त्रीशयोः ॥ गोचंद्रादशवेदयोर्यमयमाः
पंचांकयोःस्युर्जिनाःषड्वस्वोश्वनगेतुतत्त्वघटिकाःशक्रेचखंपिंडजाः ॥ ६ ॥

न्नम् ॥५॥ अथपिंडफलमाह वर्तमानतिथियुक्तेपिंडोर्ध्वांकेकृतेसतिएताःघटिकाःस्युः विश्वेंदोःशराःत्रयोदशतुल्येए
कतुल्येवापिंडेशराःपंचघटिकाः तथैवअर्कयमयोःपिंडयोःदशत्रीशयोःपंचेंदवःदशवेदयोःगोचंद्राः पंचांकयोर्यमयमाः
षड्वस्वोःजिनाः नगेतत्वघटिकाः शक्रेखं एताःपिंडघटिकाःप्रथमचतुर्दशमध्येधनं अग्रऋणमित्यर्थः परमपिंडयुक्त
तिथिमष्टाविंशतेःशोध्यशेषात्फलंग्राह्यं अत्रोपपत्तिः अत्रपिंडोनामचंद्रमंदकेंद्रं तत्रप्रतिपिंडंचंद्रस्यमंदफलानिप्रसा

ध्यगत्यंतरकलाप्रमाणेनतेषांघटिकाःकृत्वासिद्धाःपाठपठिताः पिंडापरपर्यायचंद्रकेंद्रमुच्चोनःग्रहःकेंद्रमितिप्रकारेणभव
ति अतस्तुलादौस्वमजादौऋणमितियद्यपि तथापिभोग्यकरणेचंद्रमंदफलंव्यस्तंभवतीतिमेषादिषट्केकेंद्रेफलंधनं अ
तश्चतुर्दशपिंडमध्येधनं तुलादावृणं अतोग्रेऋणमित्युपपन्नम् ॥ ६ ॥ अथस्पष्टतिथिवारादिकमाह यदानीतंमासगणात्
तिथिवाराद्यंतस्यवारेवर्तमानतिथिर्देया ततस्तस्यनाडीषुसैवतिथिहेयान्यूनोक्तंव्यासामध्यास्यात् सारविजाभिर्घटीभिः

वारेषुतिथिर्देयाहेयानाडीषुजायतेमध्या ॥ रविजापिंडफलाभ्यांसुसंस्कृतास्पष्टतां
याति ॥ ७ ॥ स्याद्भंकेवलयोस्तिथिध्रुवभयोर्योगेतिथेर्नाडिकायुक्ताव्यंगलवद्वि
निघ्नतिथिनाव्यस्तार्कजाःसंस्कृताः ॥ नाडीभिर्ध्रुवभस्यचेन्नवियुतास्तद्धीनष
ष्ट्य६०न्विताःसैकंभंघटिकावियत्षडधिकाःषष्ट्यूनिताव्येकभम् ॥ ८ ॥

तथापिंडघटीभिःसंस्कृतासतीस्पष्टतांयातिस्पष्टास्यादित्यर्थः अत्रोपपत्तिः अत्रतिथिर्मध्यमंवाराद्यं ० । ५९ । ४ इदंति
थिगुणितंवारयोज्यं अतोत्रवारेतिथिर्युक्ताघटीवुन्यूनीकृतापलचतुष्टयंस्वल्पांतरत्वात्त्यक्तं तन्मध्यमंतिथिवाराद्यंसूर्यचंद्र
मध्यफलघटिकाभिःरविजापिंडजासंज्ञाभिःसंस्कृतंस्पष्टंस्यादित्युपपन्नम् ॥ ७ ॥ अथनक्षत्रानयनंकरोतिकेवलयोःतिथिध्रु
वभयोःयोगेसप्तविंशतितष्टेभंनक्षत्रंस्यात् तिथेर्नाडिकाव्यंगलवःकेवलतिथिषडंशहीनोयोद्विनिघ्नतिथिःतेनयुक्ताःकार्याः

ऽयंगलवश्चासौद्विनिघ्नतिथिश्चेतिविग्रहः ऽयंगलवद्वाभ्यांनिघ्नःसचासौतिथिश्चेतितत्पुरुषगर्भकर्मधारयोवा ततःव्यस्ताभिः
धनर्णविपरीताभिःअर्कजाभिःघटीभिःसंस्कृताश्चताःकार्याः ततःध्रुवभस्यनक्षत्रध्रुवस्यनाडीभिःवियुताःकार्याः चेन्नभ
विष्यंतितदातद्धीनाषष्ट्यात्ताःअन्विताःकार्याः एवंकृतेसतिभंनक्षत्रंसैकंकर्तव्यं घटिकाचेद्दियत्षड्भ्यःषष्ट्याअधिकाः
स्युःतदाताःषष्ट्यूनिताःकार्याः ऽयेकभंएकंहीनंनक्षत्रंकर्तव्यमित्यर्थः अत्रोपपत्तिर्नक्षत्रध्रुवःमासांतीयःकृतोस्ति इष्टतिथि
कालीनत्वकरणार्थंतिथिस्तत्रयोज्या तथातिथिघटिकानांनक्षत्रघटिकानांप्रतितिथिइदमंतरं १।५।० अतोऽयंगलवद्विनिघ्न

सूर्यभेंदुभयुतौर्भवेद्युतिस्तद्घटीविवरमत्रनाडिकाः ॥
चेद्द्युभेल्पघटिकास्तदासकुर्योगकोस्यघटिकाःखषट्६०च्युताः ॥ ९ ॥

तिथिनायुक्ताइति ततःस्पष्टत्वार्थंसूर्यघटीभिःसंस्कार्याः तत्रग्रहापेक्षयातिथिनक्षत्रयोर्व्यस्तमतोव्यस्तार्कजाःसंस्कृताइति
एताःनक्षत्रघटिकाःनक्षत्रध्रुवघटीभ्यःउपरिसमागताः अतस्तद्धीनाइतिचेन्न्योनाभविष्यंति तदातद्धीनषष्ट्यायुक्ताइतित
दानक्षत्रंसैकंकार्यमेव यदानक्षत्रघटिकाःषष्ट्यधिकाःतदाषष्ट्यूनाःनक्षत्रंएकहीनंकार्यंभोग्यत्वात्॥८॥ अथयोगसाधन
माह सूर्यनक्षत्रचंद्रनक्षत्रयोर्योगोयोगःस्यात् तथातयोर्घटीनांयदंतरंताःयोगघटिकाःस्युः द्युभेदिवसनक्षत्रेयदिघटिकाअ
ल्पाःस्युः तदायोगःसकुःएकयुक्तःकार्यः अस्ययोगस्यघटिकाःतदाखषट्च्युताःकार्याइत्यर्थः अत्रोपपत्तिरतिसुगमा।९।

अथपूर्णांतकालेराहुंसाधयति सप्तयमौखबाणाःचक्रेणगुणिताःकार्याः खंक्षितिःअब्धिरामाःमासगणेनगुणनीयाः अनयोर्भाग्याराशिपूर्वायासंयुतिः साअर्कशुद्धाद्वादशशुद्धाभांशैःसप्तविंशतिभागैर्युक्तासतीशुक्लगमेपौर्णमास्यंतमःराहुः स्यात् अत्रोपपत्तिः एकचक्रेराहुध्रुवः ७।२।५० अतश्चक्रहतोयमिति तथैकमासेराहुध्रुवः ०।१।३४। अनेनमासग णोगुण्यइति अनयोःसंयोगःचक्रशुद्धःकार्यः ध्रुवाणांचक्रशुद्धत्वात् तत्रक्षेपःसप्तविंशतिभागाःअतस्तद्युक्तःकार्यइ

चक्राहताःसप्तयमौखबाणा ७।२।५० मासाहताःखंक्षितिरब्धिरामाः०।१।३४ ॥ भाद्यान
योःसंयुतिरर्कशुद्धा १२ भांशैर्युता २७ शुक्लगमेतमःस्यात् ॥ १० ॥ वेदघ्नगोहृद्द्विभुक्त
धिष्ण्यंतिथ्यंतजोर्कोग्रहपूर्वकःसः ॥ राहूनितःपर्वणितद्भुजांशामन्वल्पकाश्चेद्ग्रहसंभवः
स्यात् ॥ ११ ॥ पिंडनाड्यंतरांघ्र्यूनयुक्ताइनाः १२ स्वर्ग २१ पिंडाद्रि ७ पिंडात्क्रमाद्व
र्जिताः ॥ व्यग्विनाद्दोर्लवैःस्वार्धयुक्ताभवेच्छन्नमिंदोरविच्छन्नकाद्युक्तवत् ॥ १२ ॥

त्युपपन्नम् ॥ १० ॥ अथसूर्यंसाधयति रवेःसूर्यस्यभुक्तंनक्षत्रंयत्सावयवमानीतमस्ति तद्वेदघ्नगोहृत्चतुर्भिःसंगुण्यनव भिर्भाज्यंफलंग्रहपूर्वकःराश्यादिकःतिथ्यंतजःअर्कःस्यात् पर्वणिसरविःराहुणोनितःकार्यः तस्यभुजभागाःचेत्मनु भ्यश्चतुर्दशभ्योल्पाःतदाग्रहणसंभवःस्यात् अत्रोपपत्तिःप्रत्यक्षसुगमा ॥ ११ ॥ अथग्रासमानंसाधयति गतैष्य पिंडोत्पन्नाःयाघटिकाःतासांयदंतरंतस्ययःअंघ्रिःचतुर्थांशःतेनइनाःद्वादशऊनाःयुक्ताःकार्याः स्वर्गपिंडाद्रिपिंडादिति

एकविंशतिपिंडमारभ्यषष्ठपिंडपर्यंतंऊनाः ततोग्रेयुक्ताइति ततस्तेव्यग्विनात्विराहुसूर्यात्जातैर्दोर्लवैःभुजभागैर्व जिताःकार्याः ततःस्वार्धेनयुक्ताःसंतःचंद्रस्यग्रासोंगुलाद्योभवेत् सूर्यग्रासादिपूर्ववत्साध्यं अत्रोपपत्तिःप्रतिपा दितप्रमेया ॥ १२ ॥ अथचंद्रबिंबभूछायेचसाधयति त्र्यंशोनाःएकादश ११ पिंडनाड्यंतरषडंशेवस्वर्गपिंडा त्क्रमात्ऊनाढ्याःकार्याः तच्चंद्रबिंबंस्यात् तद्वत्तथैवत्रिगुणस्यपिंडनाड्यंतरस्यअक्षांशेनपंचमांशेनभानिसप्तविंशतिमि

> विंत्रिंशेशाःपिंडनाड्यंतरस्यषष्ठोनाढ्याःस्वर्गपिंडाद्रिपिंडात् ॥ ग्लौबिंबं
> स्यात्तद्वदुर्विप्रभास्यात्रिघ्नस्याक्षांशोनयुक्तानिभानि ॥ १३ ॥ वारादिके
> भूःकुगुणाःखबाणाः १ । ३१ । ५० पिंडेद्वयं २ भद्वयमीशनाड्यः २ । ११ ॥
> क्षप्याःक्रमेणप्रतिमाससमत्रराहौयुगांकाः ९४ कलिकावियोज्याः ॥ १४ ॥

तानिस्वर्गादिपिंडादेवंक्रमादूनयुक्तानिकार्याणि साभूछायास्यात् अस्योपपत्तिर्मासगणाधिकारेकथितैव ॥ १३ ॥ अथप्रतिमासंवारादीनांचालनमाह स्पष्टार्थमेतत् अत्रोपपत्तिःसुगमा ॥ १४ ॥ दैवज्ञवर्यस्यदिवाकरस्यसुते नमल्लारिसमाह्वयेन ॥ वृत्तौकृतायांग्रहलाघवस्यपंचांगपर्वानयनंसमाप्तम् ॥ १ ॥ इतिश्रीग्रहलाघवस्यटीका यांमल्लारिदैवज्ञविरचितायांपंचांगानयनग्रहणाधिकारःपंचदशः ॥ १५ ॥

अथद्व्यब्धींद्राल्पेकेग्रहज्ञानार्थमहर्गणसाधनंवदति स्पष्टार्थमिदं अत्रोपपत्तिः विलोमविधिनापूर्वाहर्गणवासनातःसिद्धा ॥१॥२॥३॥ अथग्रंथालंकारमाह पूर्वेभास्कराद्याचार्याःप्रौढतराःकिंचिच्छायासाधनंधनुर्ज्यैविनाचक्रुः तेतेनैवकर्म

द्व्यब्धींद्राःशकरहितास्ततोभवाप्तंचक्राख्यंरविहतशेषकंतुहीनम्॥ चैत्राद्यैःपृथगमुतः
सद्दघ्नचक्रात्सिद्धाढ्यादमरफलाधिमासयुक्तम्॥ १ ॥ खत्रिघ्नंतिथिरहितंनिरग्रच
क्रांगांशाढ्यंपृथगमुतोब्धिषट्कलब्धैः ॥ ऊनाहैर्वियुतमहर्गणोभवेद्दैवारःप्राक्छरहत
चक्रयुग्गणोब्जात् ॥ २ ॥ चक्रनिघ्नध्रुवोपेताःसक्षेपाद्विगुणोद्भवैः ॥ खेटैरूनाः
स्युरिष्टाहेद्व्यब्धींद्राल्पःशकोयदा ॥ ३ ॥ पूर्वेप्रौढतराःक्वचित्किमपियच्चक्रुर्धनुर्ज्यै
विनातेतेनैवमहातिगर्वंकुभृदुच्छृंगेधिरोहंतिहि ॥ सिद्धांतोक्तमिहाखिलंलघुकृतं
हित्वाधनुर्ज्यैमयातद्गर्वोमयिमास्तुकिंनयदहंतच्छास्त्रतोवृद्धधीः ॥ ४ ॥

णामहान्अतिगर्वलक्षणोयःकुभृत्पर्वतःतस्यउच्चशृंगेउच्चशिखरेअधिरोहंति यतःभास्करेणब्रह्मतुल्येछायाधिकारेउक्तं'इ तिकृतलघुकार्मुकशिंजीनिग्रहणकर्मविनाद्युतिसाधनमिति मयाइहास्मिन्ग्रंथेअखिलंगणितजातंकर्मसिद्धांतोक्तंधनुर्ज्यां विधिंहित्वाकृतं तद्गर्वःतेषामपेक्षयागर्वःमयिकिमस्तु अपितुन यतोममबुद्धिवृद्धिःतच्छास्त्रतोजातेत्यर्थः ॥ ४ ॥

स्वस्थितिपुरस्वनामादिकथयति केशवःनंदिग्रामेअपरांतविषयेसमुद्रतटनिकटपश्चिमदेशेशिष्यादिभिर्गीतास्तुतिर्य
स्येतिसतथाकौशिकगोत्रेजातः सकलानियानिसंतिसमीचीनानिशास्त्राणितेषांयेर्थाःतान्वेत्तिजानातिसतथा एवंयोऽ
भूत्तस्यसूनुःगणेशःतदंघ्रिपद्मभजनात्तच्चरणकमलसेवनात्किंचिदवबोधांशकंज्ञानलवंलब्ध्वाप्राप्य इदंकरणंस्पष्टंस्प
ष्टार्थंवृत्तैर्नानाछंदोभिर्विचित्रंअर्थेनवहुलंचएतदकरोत्कृतवानित्यर्थः इतिपूर्वशकात्ग्रहानयनप्रकारोग्रंथालंकारश्चक्त
॥५॥ इतिश्रीमद्गणकचूडामणिदिवाकरदैवज्ञसुतमल्लारिदैवज्ञविरचितायांग्रहलाघवस्यटीकायांग्रंथसमाप्त्यलंकारव्या

नंदिग्रामइहापरांतविषयेशिष्यादिगीतस्तुतिर्योभूत्कौशिकवंशजः
सकलसच्छास्त्रार्थवित्केशवः॥ सूनुस्तस्यतदंघ्रिपद्मभजनाल्लब्ध्वाऽ
वबोधांशकंस्पष्टंवृत्तविचित्रमल्पकरणंचैतद्गणेशोऽकरोत् ॥ ५ ॥

ख्यानंसमाप्तम्॥१६॥देशेपार्थसमाह्वयेतिरुचिरेतीरेचगोदोत्तरेगोलग्रामपरेपुरारिचरणार्चासक्तविद्द्युते ॥ आसीत्तत्र
दिवाकरेतिचतुरोदैवज्ञसंघाग्रणीर्विश्वेशेसततंयदीयहृदयंयस्तस्यपुत्रोकरोत् ॥ १ ॥ मल्लारिर्गणकाग्रणीर्गुरुपदद्वं
द्वाब्जभक्तौरतोलब्ध्वाबोधलवंततोहिविवृतिंसार्थोपपत्तिस्फुटाम् ॥ वर्यस्यग्रहलाघवस्यगणकश्रीमद्गणेशाभिधप्रो
क्तस्याथकृपालवोहिसुधियःपश्यंतुतुष्यंत्विमाम् ॥२॥ बाणोनाच्छकतःकुरामविहृतानूमूलंहिमासःसयुक्बाणैर्भचदशी
नितंदिनमितिस्तस्यादलंस्यात्तिथिः ॥ पक्षःस्यात्तिथिसंमितोखिलयुतःसप्ताब्धितिथ्युन्मिताबालाख्योगणकोलिलेखच
तद्टीकांपरार्थंत्विमाम् ॥ १ ॥ समाप्तोऽयंग्रंथः ॥ ॥ ॥ ॥ ॥

# विक्रीस तयार.

## आमचे छापखान्यांत पुस्तकें मिळतात तीं–

| (वैद्यक.) | किं० रु. | आ. |
|---|---|---|
| माधवनिदान. | ३ | ८ |
| शार्ङ्गधर. | ३ | ८ |
| वैद्यसारसंग्रह. | २ | ० |
| वैद्यजीवन. | ० | १० |
| वैद्यामृत. | ० | १० |
| त्र्यंबकी. | ० | ४ |
| बोपदेवशतक. | ० | १० |
| वैद्यावतंस. | ० | ४ |

| (ज्योतिष.) | किं० रु. | आ. |
|---|---|---|
| बृहज्जातक. | १ | १२ |
| मुहूर्तचिंतामणि. | १ | ० |
| मुहूर्तगणपति. | ० | १४ |
| मुहूर्तमार्तंड. | ० | १४ |
| सर्वार्थचिंतामणि. | १ | ० |
| ग्रहलाघव सटीक. | ० | १२ |
| नीलकंठी ताजक. | १ | ४ |
| मानसागरी. | १ | ० |

| (ज्योतिष.) | किं० रु. | आ. |
|---|---|---|
| जातकाभरण. | ० | १२ |
| जातकालंकार. | ० | ८ |
| मुहूर्तदीपक. | ० | ८ |
| जातकपद्धती. | ० | ४ |
| षट्पंचाशिका. | ० | ६ |
| मुहूर्ततत्त्व. | १ | ० |
| स्फुटज्योतिष. | ० | २ |
| शीघ्रबोध. | ० | ६ |
| ज्योतिषसार. | १ | ० |

| | किं० रु. | आ. |
|---|---|---|
| **(पुराण.)** | | |
| भागवत चूर्णिका. | ४ | ० |
| अध्यात्मरामायण. | ३ | ० |
| भगवद्गीता. | ० | ८ |
| सप्तशती. | ० | ८ |
| **(धर्मशास्त्र.)** | | |
| अष्टाविंशतिस्मृति. | ५ | ० |
| धर्मसिंधु. | ३ | ० |
| व्रतराज. | ६ | ८ |
| ” | ४ | ० |
| ” | ३ | ० |
| व्रतोद्यापनकौमुदी. | १ | ० |
| शांतिकमलाकर. | ३ | ० |
| शांतिसार. | १ | ० |

| | किं० रु. | आ. |
|---|---|---|
| शांतिमयूख. | १ | ४ |
| श्राद्धमयूख. | १ | ० |
| संस्कारमयूख. | १ | ० |
| प्रतिष्ठामयूख. | ० | ८ |
| प्रायश्चित्तेंदुशेखर. | ० | १२ |
| दानचंद्रिका. | ० | १२ |
| शूद्रकमलाकर. | १ | ० |
| सारस्वतव्याकरण. | १ | ० |
| रूपावली. | ० | २ |
| समासचक्र. | ० | १ |
| विष्णुसहस्रनाम. | ० | ६ |
| ” | ० | २ |
| ” | ० | १ |
| गोपालसहस्रनाम. | ० | ६ |

| | किं० रु. | आ. |
|---|---|---|
| गोपालसहस्रनाम | ० | २ |
| ” | ० | १ |
| महिम्नसटीक. | ० | ६ |
| महिम्नमूळ. | ० | १ |
| गंगालहरीसटीक. | ० | ८ |
| भर्तृहरिकृत शृंगारशतक. | ० | ४ |
| ” नीतिशतक. | ० | ४ |
| ” वैराग्यशतक. | ० | ४ |
| शिवकवच. | ० | १ |
| **(प्राकृत.)** | | |
| सिंहासनबत्तिशी. | ० | ४ |
| वेताळपंचविशी. | ० | ८ |
| शुकबहात्तरी. | ० | ८ |
| शिवलीलामृत. | ० | १२ |

| | कि० रु. | आ. |
|---|---|---|
| रुक्मिणीस्वयंवर. | ० | ८ |
| परमामृत. | ० | ६ |
| पवनविजय. | ० | ४ |
| हस्तामलक. | ० | ८ |
| ( हिंदुस्थानी. ) | | |
| तुलसीकृतरामायण. | ४ | ० |
| ” | ३ | ८ |
| ” | ३ | ० |
| ” | २ | ० |
| ” | १ | ० |
| सुरजपुराण. | ० | ६ |
| गोपीचंदआख्यान. | ० | ३ |
| ज्ञानमाला. | ० | ३ |
| जोगभर्तृहरि. | ० | १ |

| | कि० रु. | आ. |
|---|---|---|
| प्रेमसागर. | २ | १२ |
| ” | १ | ८ |
| रामगीतावली. | १ | ० |
| रमलप्रभावली. | ० | १ |
| शनिकथा राघवदासकृत | ० | ३ |
| वैराग्यरामायण. | ० | ६ |
| शनिकथा कायस्थकी. | ० | १ |
| स्वप्नाध्याय. | ० | २ |
| पल्लीपतनविचार. | ० | २ |
| भारतसार भाषा. | २ | ० |
| गीताभाषाटीका दोहासह. | १ | ४ |
| पुष्टिमार्गीय वैष्णवके पदसंग्रह भाग १।२।३ | ० | १२ |
| वल्लभाख्यान सटीक. | ३ | ८ |

| | कि० रु. | आ. |
|---|---|---|
| दुर्गाचालिसी. | ० | १ |
| हनुमदष्टक. | ० | १ |
| सुदामाकी बाराखडी | ० | १ |
| भजनरत्नावली. | १ | ० |

इत्यादि संस्कृत, प्राकृत, मराठी, गुजराथी व शालोपयोगी अशीं सर्वप्रकारचीं पुस्तकें विकत मिळतील. बाहेरगांवच्या लोकांस व्हॅल्युपेएबल करून पाठविण्यांत येतील.

ठिकाणा—मुंबादेवी बाजार खाऱ्याकुव्यानजिक
महादेवशास्त्री अमराण्रकर
यांचा छापखाना, मुंबई.

हें पुस्तक मुंबईंत महादेव गोपाळ शास्त्री अमरापूरकर यांचे "ज्ञानदर्पण" छापखान्याचे व्यवस्थापकांनीं "गणपत कृष्णाजी" यांचे छापखान्यांत छापिलें. शके १८१६ जयनामसंवत्सरे, आषाढशु० ६ रविवार.

